




# श्रीमद्भगवद् गीतायाः

## विभूति वर्णन नामा दशमोध्यायः ।

सच-

श्रीमद् गोपीश्वरैकनिष्ठ दीक्षितोपाधि विद्वद्वर श्रीछगनलाल देव शर्म शास्त्रि

तनुजनुषा

**कात्यायनी पीठाश्रित—**

**पं० नत्थीलाल देव शास्त्रिणा**

विरचितया—

**वृत्तिप्रभाख्या व्याख्यया समुवलितः**

तदन्तेवासि श्रीमत् प्रियतम सत्यानन्द ब्रह्मचारिणा स्वीय वित्ततो संमुद्राप्य प्रकाशितः ।

**सम्वत् १९९२ वि०**

[ अयंखलु सपाद मुद्रातो लभ्यो विदुषां छात्राणां तु तदर्धतः ]

विदुषाम् १।) छात्राणाम् ।।=)

बाबू प्रभुदयाल मीतल द्वारा अग्रवाल इलेक्ट्रिक मशीन प्रेस, मथुरा में मुद्रित ।

परमपूज्यपादानां श्रीमतां सान्तीके प्रेषितेयं कान्तिप्रभा
भवत् स्वान्तं साधु तोषयतुतरामित्यभ्यर्थनम्
समीक्ष्यैनां स्वसम्मत्याऽनु विबोधनीयोऽयं जनोऽनुकम्पयाऽत्र

विनयावनतो भवदनुकम्पाकाङ्क्षी

ग्रन्थकर्ता दीक्षितोपाधि नत्थीलाल देव शास्त्री

कात्यायनीपीठ राधाबाग वृन्दावनधाम

रिश
चैत




* श्री श्रीकात्यायन्यैनमः *

# श्रीमद्भगवद्गीता

[ अध्याय १० ]

## श्रीवृत्तिप्रभा टीका सहित.

भूय एव महावाहो श्रृणुमे परमं वचः ।
यत्तेऽहं प्रयिमाणाय वद्यामि हितकाम्यया ॥१॥

भोमहावाहो अहं परमेश्वरः प्रीयमाणायते तुभ्यं हितकाम्यया यद्वचो वक्ष्यामि तनमे मम परमं वचो भूय एवत्वं श्रृणु इत्यन्वयः ॥ १ ॥

श्रीमन्नन्दसुतं पतिं विवरितुं शश्वन् नमस्याभरैः ।
भूयः श्री व्रज सुंदरी कुलशतैः कैशोर लीलालयैः ॥
प्रेष्टा येऽयतमा हरेः प्रियतमे वृन्दावने संस्थिता ।
कात्यायन्यशिवं कृतौ शमयतां मे केशवेनार्चिता ॥१॥

विबुधवन्दितसत्पदपङ्कजो निगमतत्वमयो ऽयवतां गतिः ।
व्रजजनैकरति र्मम सत्कृतौ दिशतु नन्दकिशोर विभुः शिवम् ॥२॥

नत्वा श्रीमद्गुरुं भूयो मनीष्यानन्द तीर्थकम् ।
गीताया वितनोम्येष व्याख्यां व्युत्पत्ति दीपनीम् ॥३॥

सत्यानन्दहिताय या विरचिता गीताविवृत्तिर्मया ।
नित्यानन्दमलं सतां विदधती निर्मत्सराणां नृणाम् ॥
नत्थीलालवुधासुधाधिकतरा सच्छात्रवृन्दस्य सा ।
ज्ञानानन्दमयस्य केशवविभोः प्रीत्यै सु भूयादियम् ॥ ४ ॥

विद्यावैभवविश्रुतैः सुधिषणाचारादिसम्पद्युतैः ।
विद्वद्भिः प्रथमैः निजोक्तिसुधया शब्दार्थभावाप्लुता ॥
याकारि प्रतिशब्दसिद्धिमहितां तामृवृत्ति कोशान्विता ।
मन्तेवासि जनीनवोधविधये तन्वन्न हास्यः सताम् ॥५॥

**दीक्षितो पाधि भूदेव सनाढ्यान्वय सम्भवः।**
**नत्थीलालाभिधः श्रीमच्छुगँल्लालात्मजः सुधीः ॥ ६ ॥**

सम्प्रति स्वाः विभूतीः प्रपञ्चयन् भगवानाह भूय एवेत्यादिना भोमहाबाहो, महान्तौ विशालौ बाहू भुजौ यस्यस इति [ अनेक मन्यपदार्थे ] । २ । २ । २४ । इति बहुव्रीहिसमासे [ आन्महतः समानाधिकरण जातीययोः ] । ६ । ३ । ४६ । इत्याकारान्तादेशे सवर्णे दीर्घे महाबाहुस्तत् सम्बुद्धौ रूपम् मह्यते इति मह पूजाया मिति धातो रौणादिके [ वर्तमाने पृषन्महद् बृहज् जगच्छतृवच्च ] । २ । ८४ । इत्यति प्रत्यये रूपम् । "विशङ्कटं पृथुबृहद् विशालं पृथुलं महत" । इत्यमरः।

यद्वा महनं महः महधातोः [ भावे ] । ३ । ३ । १८ । इति घञ् प्रत्यये [ संज्ञा पूर्वको विधिरनित्यः ] इति [ ओर्गुणः ] । ६ । ४ । १४६ । इत्यत्र गुणोक्त्या ज्ञापितया परिभाषयोपधा वृद्धय भावे [ पुंसिसंज्ञायांघः प्रायेण ] । ३ । ३ । ११८ । इतिघ प्रत्ययेत्रा रूपम् । "महीनद्यन्तरे भूमौ मह उद्भव तेजसोः" । इति कोशान्तरम् तं महं तेज स्तनोति विस्तारयतीति तनुविस्तारे इति धातोः [ अन्येष्वपिदृश्यते ] । ३ । २ । १०१ । इत्यत्रापिशब्दस्य तिपातत्वेन सर्वोपाधिव्यभिचारार्थत्वात् डप्रत्यये डित्वाट्टेर्लोपे महदिति ( अर्थात ब्राह्मणस्य मुख प्रधानवत् क्षत्रियस्य भुजप्रधानत्व मिति सम्बोधने तात्पर्य्यं मिति भावः बाधते रिपूनिति बाधृविलोडने इति धातो रौणादिके [ अर्जि दृशि कम्यमिपशि बाधा मृजि पशितुक्दीर्घ हकाराश्च ] ।१।२७। इति कुप्रत्यये हकारान्तादेशेबाहुरिति । "भुजबाहू प्रवेष्टो दोः" । इत्यमरः अहं परमेश्वरः प्रीयमाणाय, प्रीयते इति प्रीङ् प्रीताविति धातोः कर्तरि [ लटः शतृशानचाव प्रथमासमानाधिकरणे ] । ३ । २ । १२४ । इति शानजादेशे तस्यशित्वात् सार्वधातुकत्वेन [ दिवादिभ्यः श्यन् ] । ३ । १ । ६९ । इति श्यन् प्रत्यये [ आनेमुक् ] । ७ । २ । ८२ । इति मुगागमे अट्कुप्वाङ् इतिणत्वे प्रीयमाणस्तस्मै [ हितयोगेच ] ।वा०। इति चतुर्थी तेतुभ्यम् [ तेमया वेकवचनस्य ] । ८ । १ । २२ । इतिते आदेशः हितकाम्यया हितस्य काम्या इति षष्ठीति समासे हितकाम्यातया [ इत्तौ ] । २ । ३ । २३ । इति तृतीया अधायीति धारणपोषणार्थाद् धा धातोः कर्मणि निष्ठासंज्ञके [ निष्ठा ] । ३ । २ । १०२ । इतिक्त प्रत्यये ( दधातेर्हिः ) । ७ । ४ । ४२ । इतिह्यादेशेहितम् पथ्यमिति कमनमिति कमुकान्ता विति धातोः [ आयादय आर्धधातुकेवा ] । ३ । १ । ३१ । इति णिङभावपक्षे [ हलश्च ] ।३।३।१२१। इति ( भावे ) । ३ । ३ । १८ । इतिवा घञ् प्रत्यये ( नोदात्तोपदेशस्य मान्तस्यानाचमेः ) ।७।३।३४। इत्यत्र [ अनाचमिकमिवमीना मितिवाच्यम् ] । वा० । इति पर्युदासात्, [ अत उपधायाः ] । ७ । २ । ११६ । इत्युपधावृद्धौ कामः ततः कामेसाधुरिति [ तत्रसाधुः ] । ३ । ४ । ९८ । इति यत प्रत्यये भत्वादकारलोपे टापि रूपम्।

यद्वा कामयितु मर्हा इति णिङन्तात् कामिधातोः ( अचोयत् )।३।१।९७।इति यत प्रत्यये तस्यार्धधातुकत्वात् ( णेरनिटि ) ।६।४।५१। इति णेर्लोपे टापिरूपम् यद्वा आत्मनोहित मिच्छतीति

हित शब्दात् ( काम्यच्च ) ।३।१।६। इति काम्यच् प्रत्यये हितकाम्यति ततः काम्यच् प्रत्ययान्तात् स्त्रीत्वे भावे (अप्रत्ययात्) ।३।३।१०२। इत्यकार प्रत्यये टापि हितकाम्यातया । यद् वचः वचनम् उच्यते इति ब्रूञ् धातो रार्धधातुकविवक्षायाम् ब्रुवोवचिः, इति वचयादेशे वच परिभाषणे इति धातोर्वा सर्वधातुभ्योऽसुन्, ।४।१६६। इत्यौणादिकेऽसुन् प्रत्यये वच इति ततः कर्माणि द्वितीया "भाषितं वचनंवचः"।इत्यमरः वक्ष्यामि कथयिष्यामि वच् धातोःकर्तरि लृट उत्तमपुरुषैकत्वेमिपि ( स्यतासी लृलुटोः ) ।३।१।३३। इतिस्य प्रत्यये एकाच्त्वादिण्निषेधे चोः कुरिति कुत्वे षत्वे चत्वेऽङ्ग संज्ञायाम् ( अतोदीर्घो यञि ) । ७ । १ । १०१ । इति दीर्घे रूपम् तनमे मम परमम् परोत्त मा मा लक्ष्मी यस्मिन्निति बहुव्रीहि समासे ( स्त्रियाः पुंवद् भाषित पुँस्कादनूङ् समानाधिकरणे स्त्रिया मपूरणी प्रियादिषु ) । ६ । ३ । ३४ । इति पुंवद्भावे ( गोस्त्रियोरूपमर्जनस्य ) १।२।४८। इति ह्रस्वे परमम् अर्थात् निरतिशयवस्तुप्रकाशकत्वेनोत्कृष्टश्रीसम्पन्नम् तथाभूतं वचः भाषितम् यद्वा तद्वचः परममोमर्थादङ्गी कृत्यैव ' ओमेवं परमं मते ) इत्यमरः ( ओमेवं परमं भवे इत्यव्यय प्रकरणे व्याडिः ) ओं प्रश्नेऽङ्गीकृतौ रोषे । इति विश्वः परं मिमीते मिनोति मीनातीति माङ् माने डुमिञ् प्रक्षेपणे मीञ्हिंमायाम् वा धातोः ( उणादयो बहुलम् ) । ३ । ३ । १ । इति बाहुल कादुडम् प्रत्यये डित्वाट्टेर्लोपे ( कृन्मेजन्तः ) । १ । १ । ३६ । इति मान्तत्वा दव्ययत्वम् भूयः पुनरपित्वं शृणु समाकर्णयश्रुश्रवणे इति धातो र्लोटो मध्यम पुरुषैकत्वे सिपि ( सेर्ह्यपिच्च ) । ३ । ४ । ८७ । इतिह्यादेशे ( श्रुवः शृच ) । ३ । १ । ७४ । इति शृआदेशेश्नु प्रत्ययेच ( उतश्च प्रत्ययादसंयोग पूर्वात् ) । ६ । ४ । १०६ । इतिहेर्लुकि ( ऋवर्णान्नस्य णत्वं वाच्यम् ) । वा० । इतिणत्वे रूपम् ॥ १ ॥

**नमेविदुः सुरगणाःप्रभवं न महर्षयः ।**
**अहमादिर्हि देवानां महर्षीणां च सर्वशः ॥ २ ॥**

सुरगणा महर्षयश्च मेमम प्रभवं न विदुः हियस्यात् , अहम् सर्वशो देवानाम् महर्षीणां चादिरस्मीत्यन्वयः, ॥ २ ॥

सुराणां देवानां गणाः संघा इति षष्ठीति समासे रूपम् सुरन्ति ऐश्वर्य्यैलभन्ते इति षुर प्रसवैश्वर्ययो रितिधातोः ( इगुपधज्ञाप्रीकिरः कः ) इति कप्रत्यये किस्वाद् गुण त्तिषेधे सुराः । " अमरानिर्जरादेवास्त्रिदशाविबुधाः सुराः । इत्यमरः " गणयन्ते इति गण संख्याने इति स्वार्थणिजन्ताद् गणिधातोः [ एरच् ] । ३ । ३ । ५६ । इत्यच् प्रत्यये तस्यार्धधातुकत्वात् [ णेरनिटीति ] णेर्लोपे गणाः । "गणः स्यात् प्रमथे सङ्घे संख्यासैन्यप्रभेदयोः" । इति मेदिनी । "संघाते प्रमथे गणः" । इत्यमरः च पुनरर्थेऽव्ययम् महर्षयः महान्तश्चते ऋषय इति [ सन् महत् परमोत्तमोत्कृष्टाः पूज्यमानैः ] । २ । १ । ६१ । इति समासे [ आन् महतः समानाधिकरणजातीययोः ] । ६ । ३ । ४६ । इत्यात्वे सवर्ण दीर्घे गुणैकादेशेरूपम् मह्यते इति औणादि-

केऽति प्रत्यये रूपम् महानिति ऋषन्ति जानन्तितत्त्वमिति ऋषीगता विति धातोरौणादिके (इगुपधात् कित् ] । ४ । १२० । इनीन् प्रत्यये कित्वाद्गुणनिषेधे ऋषयः । "ऋषयः सत्यवचसः" । इत्यमरः ।"ऋषिर्वेदे वशिष्ठादौ दीधितौच पुमानयम्"। इति मेदिनी तथा तेच । महर्षिः १ देवर्षिः २ ब्रह्मर्षिः ३ परमर्षिः ४ काण्डर्षिः ५ श्रुतर्षिः ६ क्रमावराः ७ इति सप्तविधाः । इति रत्नकोषः अत्र खलु महर्षय इतिसप्त विधानामपि ऋषीणा मुपलक्षण मवगन्तव्यम् तेषत्वे मे मम परमेश्वरस्य ( तेमया वेकवचनस्य ) इति मे आदेशः कर्तरिषष्ठी प्रभवत्यस्मादिति प्रभवन मितिवा प्रपूर्वाद् भूधातोः ( ऋदोरप् । ३ । ३ । ५७ । इत्यप् प्रत्यये गुणावादेशयोः प्रभव स्तम् कर्मणि द्वितीया यद्वा भवन मिति भूधातो र्बाहुलकात् अप्प्रत्यये भवः । भवः क्षेमेशसंसारेसत्तायां प्राप्तिजन्मनोः । इति मेदिनी प्रकृष्टश्चासौ भवो जन्मेति ( कुगति प्रादयः ) । २ । २ १८ । इति समासे प्रभवस्तम् प्रकृष्टोत्पत्ति मिति भावः "स्याज् जन्महेतुः प्रभवः" । इत्यमरः । "प्रभवो जलमूलेस्यात् जन्महेतौ पराक्रमे ज्ञोनस्य चादिमस्थाने" । इति मेदिनी न विदुः नजानन्तीत्यर्थः विद्ज्ञाने इति धातोर्लटः प्रथमपुरुषबहुत्वेफौ तस्य ( विदोलटोवा ) । ३ । ४ । ८३ । इत्युसादेशे शपितस्यादादित्वाल्लुकि ( सार्वधातुकमपित् ) इति ङित्वाद् गुण निषेधे रूपम् अर्थाद् देवमहर्षीणाम् सर्वज्ञत्वेऽपि अजन्मादे रेवमे भक्तवात्सल्याय बहुविधविभूतिभिराविर्भवने सविस्मयत्वेनाज्ञत्व मेवेतिभावः हि यस्मात् कारणात् अहम् परमेश्वरः तेषां देवमहर्षीणाम् सर्वशः सर्वैः प्रकारैः इति सर्व शब्दस्यबहुसंख्यावाचकत्वेन ( बह्वल्पार्थाच्छस् कारका दन्यतरस्याम् ) । ५ ।४। ४२ । इति शस् प्रत्यये ( तद्धितश्चा सर्वविभक्तिः ) । १ । १ ३८ । इत्यव्ययत्वम् अर्थादुत्पादकत्वेन बुद्ध्यादिप्रवर्तकत्वेन निमित्तोपादानकारणत्वेनचादिः प्रथमः कारण मस्मीति शेषः आदीयते प्रथमं गृह्यते इति आङ् पूर्वाद् डुदाञ् दाने इति धातोः ( दाधाध्वदाम् ) । १ । १ २० । इति घुसंज्ञकत्वेन ( उपसर्गे घोः किः ) । ३ । ३ । ९२ । इति कि प्रत्यये तस्य-कित्वात् ( आतोलोपइटिच ) । ६ । ४ । ६४ । इत्याकारलोपे रूपम् "पुंस्यादिः पूर्व पौरस्त्य प्रथमाद्याः ।" इत्यमरः अर्थाद् देवानां महर्षीणां च सोपाधिकत्वेनो पाधिमात्रा गम्योऽहमज्ञेय एवास्मी तिभावः ) ॥ २ ॥

**योमामजं मनादिंच वेत्तिलोकमहेश्वरम् ।**
**असंमूढः स मर्त्येषु सर्वपापैः प्रमुच्यते ॥ ३ ॥**

यः कश्चित् अनादिम् अजम् सर्वलोकमहेश्वरम् च मां परमेश्वरं वेत्तिजानाति मर्त्येषु असंमूढः स सर्वपापैः प्रमुच्यते इत्यन्वयः ॥ ३ ॥

यः कश्चित् अर्थात् यच्छब्दस्य सर्वनामत्वेनान्वर्थसंज्ञकत्वात् वर्णाश्रमादिप्रतिबन्धकता मज्ज्ञाने नास्तीति ध्वन्यते अनादिम् अविद्यमान आदि र्यस्येति नञोऽस्त्यर्थानांवाच्यो वाचोत्तरपदलोपः, । वा० । इति बहुव्रीहि समासे उत्तर पदलोपेनञो नस्यलोपे ' तस्मा न्नुडचि '

। ६ । ३ । ७४ इति नुडागमे अनादिस्तम् सर्वं कारणकारणत्वात् स्वयमादिरहितम् आदीयत इति आदिः पूर्वः पुंस्यादिपूर्वपौरस्त्यप्रथमाद्याः । इत्यमरः अजम् नजात इति नञ् पूर्वाज् जनी प्रादुर्भावे इति धातोः (अन्येष्वपि दृश्यते) । ३ । २ । १०१ । इति डप्रत्ययेटेर्लोपे नञोनस्य लोपे अजस्तम्।#यद्वा अजति गच्छति भक्त वश्यतामिति अजगतिक्षेपणयो रितिधातोः(पचाद्यचि) । ३ । १ । १३४ । (अजाविभ्यांध्यन्) । ५ । १ । ८ । इति निर्देशात् अच्प्रत्ययस्यार्धं धातुकत्वेपि (अजेर्व्यं घञपोः) । २ । ४ । ५६ । इति व्यादेशाभावे रूपम् । अजश्छागे हरे विष्णौ रघुजे वेधसिस्मरे । इति हैमः । "अजो हरौहरे कामेविधौ छागेरघोः सुते" । इति विश्वः । अजा विष्णुहरच्छागाः । इत्यमरः लोकमहेश्वरम् लोकानां भुवनानां जनानां च महेश्वर इति षष्ठीति समासे लोक महेश्वरस्तम् लोक्यन्ते इति लोकृ दर्शने इति धातोः (हलश्च) । ३ । ३ । १२१ । इति घञ् प्रत्यये लोकाः । लोकस्तु भुवनेजने । इत्यमरः । लोको विश्वेजने । इतिहैमः महाँश्चासा वीश्वर इति (सन्महत् परमोत्तमोत्कृष्टाः पूज्यमानैः) इति समासे महेश्वर इति मह्यते इति मह पूजायामिति धातो रौणादिकेऽति प्रत्यये रूपम् ईष्टे इति ईश ऐश्वर्ये इति धातोः ताच्छील्ये कर्तरि (स्थेशभास पिसकसो वरच्) । ३ । २ । १७५ । इति वरच् प्रत्यये तस्यार्धधातुकत्वात् प्राप्तस्येटः (नेड्वशिकृति) । ७ । २ । ८ । इति निषेधे ईश्वरः यद्वा अश्नुते व्याप्नोति सर्वत्रेति वरदान क्रियायां सर्वतः प्रथमो गीयते वेति अशूङ् व्याप्तौ संघातेचेति धातो रौणादिके (अश्नुते राशुकर्मणि वरट्च) । ५ । १५ । इति वरट् प्रत्यये चकारा दुप धायाईत्वे ईश्वरः । "ईश्वरो मन्मथे शंभौ नाद्ये स्वामिनि वाच्यवत् ईश्वरी चेश्वरो मायाम्" । इति मेदिनी । ईश्वरः शङ्करेऽधीशे तत्पत्न्या मीश्वरीश्वरा । इति वोपालितः तथा भूतंमाम् परमेश्वरम् वेत्ति जानाति विदज्ञाने इति धातोर्लटः प्रथमपुरुषैकत्वेतिपिशपि तस्यादादित्वाल् लुकि लघूपधगुणे चर्त्वेरूपम् मर्त्येषु मनुष्येषु म्रियन्ते यस्मिन्निति मृङ् प्राणत्यागे इति धातोरौणादिके (हसिमृग्रिण वामि दमि लूपू धुर्विभ्य स्तन्) । ३ । ८६ । इति तन् प्रत्यये तस्यार्धधातुकत्वात् गुणे रपरे मर्तो भूलोकः ततः तत्रभव इति (दिगादिभ्योयत्) । ४ । ३ । ५४ । इति दिगादे राकृतिगणत्वात् यत् प्रत्यये यचिभमिति भत्वात् (यस्येति च) । ६ । ४ १४८ । इत्यकारलोपे मर्त्या स्तेषु (यतश्चनिर्धारणम् । २ । ३ । ४१ । इति निर्धारणेसप्तमी । मनुष्या मानुषा मर्त्या मनुजा मानवा नराः । इत्यमरः असंमूढः संमुह्यतेस्मेति संपूर्वान् मुहवैचित्त्ये इति धातो रकर्मकत्वात् (गत्यर्थाकर्मक श्लिषशीङ्) । ३ । ४ । ७२ । इति कर्तरिक्त प्रत्यये एकाच्त्वादिड् निषेधे (होढः) । ८ । २ । ३१ । इति हस्यढत्वे (झषस्तथोर्धोऽधः) । ८ । २ । ४० । इति तकारस्य धत्वेष्टुत्वे (ढोढेलोपः) ।८। ३।१३ । इति ढकारलोपे (ढ्रलोपे पूर्वस्यदीर्घोऽणः) । ६ । ३ । १११ । इति दीर्घे संमूढः अति वालिशः अर्थाद् जडाजडयोर्बुद्ध्यात्मनोरेकी भावेनान्योन्याध्यासलक्षणेन मूढः संमूढः सनभवतीति नञ् समासे (नलोपोनञः) । ६ । ३ । ७३ । इति नकारलोपे रूपम् । अज्ञे मूढ यथाजात मूर्ख वैधेय वालिशाः । इत्यमरः । मूढस्तन्त्रित वालयोः । इति विश्वः समहामनाः सर्वपापैः सर्वाणियानि पापानिकिल्विषाणि इति (पूर्वकालैक सर्व जरतपुराणनवकेवलाः समानाधिकरणेन) । २ । १ । ३६ ।

इति समासे सर्व पापानितैः अर्थाद् ज्ञाता ज्ञातै रिति भावः ( कर्तृकरणयोस्तृतीया ) २ । ३ । १८। इति कर्तरि तृतीया पान्त्यास्मानं येभ्य इति पारक्षणे इति धातो रौणादिके ( पानी विषिभ्यः पः ) ३ । २३ । इत्यपादाने प प्रत्यये पापानि । अस्त्री पङ्कं पुमान् पाप्मा पापं किल्विषकल्मषम्। इत्यमरः प्रमुच्यते प्रहीयते अर्थात्त्यक्तो भवति प्रपूर्वात् मुच्लृमोचने इति धातोः कर्मणिलटः ( भावकर्मणोः ) । १ । ३ । १३ । इत्यात्मने पद संज्ञके प्रथम पुरूषैकत्वे तादेशे टेरेत्वे सार्व धातुकत्वात् ( सार्व धातुकेयक् ) । ३ । १ । ६७ । इति यक् प्रत्यये गुणनिषेधेरूपम् * यद्वायोऽसंमूढः विवेकशीलस्तत्ववित् मर्त्येषु मरणशीलेषु अर्थादुत्पाद विनाश शालिषु भूलोक जनिषु सर्वेषु स्थावरजङ्गमेषु अभिव्यापका धारे सप्तमी मर्त्येष्विति सर्वेषा मुपलक्षणम् अनादिम् सर्वेषामप्यादि भूतं स्वयन्तु आदि रहितम् अजम् अजान्मानम् सर्वलोकमहेश्वरम् सर्वेचते लोका स्तेषां महाः पूज्यास्तेषामीश्वरस्तम् मह्यन्ते पूज्यन्ते इति घञ् प्रत्ययः संज्ञा पूर्वकत्वादुपधावृद्धय भावः अर्थादिन्द्रादीना मपि लोकेशाना मीशितारम् ।

यद्वा लोकाश्च महा उत्सवाश्चेति द्वन्द्वे लोक महाः सर्वेचते लोक महास्तेषामीश्वरम् सर्व लोकेश्वरम् सर्वोत्सवेश्वरं मा मेव वेत्त्यवगच्छति स सर्वपापैर्निखिलदुरितैः पापं विद्यते येषा मिति पापशब्दात् ( अर्श आदिभ्योऽच् ) इत्यच् प्रत्यये भत्वादकारलोपे रूपम् पापास्तैः अर्थाद् विषयवासनाकलुषितान्तःकरणैः पुरुषैर्वा स्वयमेव प्रमुच्यते दूरत एवमुक्तो भवति ।

यद्वा सर्वं पातीति पारक्षणे इति धातोः ( आतोऽनुपसर्गेकः ) । ३ । २ । ३ । इतिक प्रत्यये ( आतोलोप इटिचेत्याकारलोपे उपपदसमासे सर्वपोविष्णुः तमाप्न वन्तीति आप्लृलम्भने इति धातोः ( कर्मण्यण् ) । ३ । २ । १ । इत्यण् प्रत्ययेसर्वपापानितैः अर्थाद् विधि विहित नित्यनैमित्तिक कर्म जातैः त्यक्तो भवति अर्थात् त्यक्त सर्वपरिग्रहस्यात्मारामस्य तत्त्वविदो मुनेः स्वर्गादि फलक कर्मकलापकरणानावश्यकत्व मिति यावत् ॥ ३ ॥

**बुद्धिर्ज्ञान मसंमोहः क्षमा सत्यं दमः शमः ।**
**सुखं दुःखं भवो भावो भयं चाभय मेवच ॥ ४ ॥**

सम्प्रति महेश्वरतां स्फुटयन्नाह बुद्धि रित्यादिना बोधन मितिबुध्यतेऽनयेति बुध अवगमने इति धातोः ( स्त्रियांक्तिन् ) । ३ । ३ । ६४ । इतिक्तिन् प्रत्यये एकाच्त्वादिण् निषेधे ( झषस्तथोर्धोधः ) । ८ । २ । ४० । इति धत्वं ( झलांजश्झशि ) । ८ । ४ । ५३ । इति जश्त्वे बुद्धिः । बुद्धिर्मनीषाधिषणा । इत्यमरः अर्थादन्तःकरणस्य सूक्ष्मार्थविवेकसामर्थ्यम् ज्ञातमिति ज्ञा अबबोधने इति धातोः ( ल्युट्च ) । ३ । ३ । ११५ । इति ल्युटि × ज्ञायतेऽनेनेति ( करणाधिकरणयोश्च, इति वाल्युटि अनादेशे दीर्घे ज्ञानम् अर्था दात्मानात्मादिसर्वपदार्थावबोधः । मोक्षे धीर्ज्ञानम् इत्यमरः असंमोहः संमोहन मिति संमुह्यते संमोह्यते येन यस्मिन् वेतिसंपूर्वात् मुहवैचित्ये इति केवलात् णिजन्ताद्वा ( भावे ) ३ । ३ । १८ । ( अकर्तरिचकारके संज्ञायाम्

। ३ । ३ । १६ । इति याघञ् प्रत्यये लघूपध गुणणिलोपयोः संमोहः अर्थात् कर्तव्या कर्तव्यादि ज्ञान राहित्यम् सन भवतीति नञ् समासे नलोपे ऽसंमोहः अर्थात् प्रत्युत्पन्नेषु बोद्धव्यादिषु निराकुलतया सविवेका प्रवृत्ति रितिभावः, क्षमा क्षमन मिति क्षमूष् सहने इति धातोः स्त्रीत्वे भावे ( षिद्भिदादिभ्योऽङ् )। ३ । ३ । १०४ । इत्यङ् प्रत्यये टापि सवर्णे दीर्घे रूपम् । क्षमा तितिक्षा पृथ्वी च योग्ये शक्ते हिते क्षमम् । इति धरणिः अर्थात् आक्रुष्टस्य ताडितस्यधानिर्विकार चित्तत्तारूपा तितिक्षेति भावः सत्यम् अस्तीति अस् भुवि धातोः लटः ( लटः शतृ शानचौ ) । ३ । २ । १२४ । इत्यादिना शतृ प्रत्यये तस्य सार्वधातुकत्वाच्छपि अदादित्वाल्लुकि ( सार्व-धातुकमपित् ) । १ । २ । ४ । इतिङित्वेन ( श्नसोरल्लोपः ) । ६ । ४ १११ । इत्यकारलोपे सन् । सन् सुधी कोविदो बुधः । इत्यमरः । सन् साधौ धीर शस्तयोः मान्ये सत्ये विद्यमाने त्रिषु साध्व्युभयोः स्त्रियाम् । इति मेदिनी ततः ( तत्र साधुः ) । ४ । ४ । ९८ । इतियत् प्रत्यये यचिभमिति भत्वाज् जश्त्वाभावे सत्यम् रूपम् । सत्यंशपथ तथ्ययोः । इत्यमरः । सत्यं कृते च शपथेतथ्ये च त्रिषु तद्वति । इति मेदिनी अर्थात् प्रमाणादिना साध्ववगतस्यार्थस्य तथै-वाभिभावनम् इति भावः दमः दमन मिति दमु उपशमे इति धातोः ( भावे ) । ३ । ३ । १८ । इति घञ् प्रत्यये तस्यञित्वात् प्राप्ताया उपधा वृद्धेः ( नोदात्तोपदेशस्य मान्तस्याना चमेः ) ।७।३।३४। इति निषेधे रूपम् दमः स्यात् कर्दमे दण्डे दमने दमथेऽपि च । इति हेमचन्द्रः अर्थाद् वाह्येन्द्रियाणां चक्षुरादीनां निग्रह इति भावः शमः शमन मिति पूर्ववद्घञादिकार्यम् । शमथस्तु शमः शान्तिः । इत्यमरः । अर्थाद् वाह्येन्द्रिय गृहीत विषयेभ्यो मनसोविनिग्रह इतिभावः सुखम् सुष्ठुशोभन प्रफुल्लमिति यावत् तथा भूतंखं मुखम् यस्मिन्निति बहुव्रीहि समासे रूपम् खन्यते शब्दोच्चार णाद्यर्थं विस्तार्यते इति खनु अवदारणे इति धातोः ( अन्येष्वपि दृश्यते ) । ३ । २ । १०१ । इति सूत्रेऽपिशब्दस्य सर्वोपाधि व्यभिचारार्थकत्वेन केवलादपिड प्रत्यये डित्वाट्टेर्लोपे खमिति । खं खः संविदि व्योमनीन्द्रिये शून्ये विन्दौसुखे खस्तुसूर्ये । इति हैमः यद्वा सुखयतीति चौरादिकात् तत् क्रियार्थात् सुखि धातोः पचाद्यचिणेर्लोपे रूपम् अर्थादनुकूल वेदनीयत्व रूपश्चित्तप्रसाद इति भावः दुःखम् दुर्दुष्ट विकृत मितियावत् तथाभूतं खंमुखं यस्मिंस्तदिति पूर्ववद्बहुव्रीहि समासे रूपम् दुःखयति प्रतिकूलतां वेदयतीति दुःखि धातोः पचाद्यचिरूपम् अर्थात् प्रतिकूलतावेदनीयत्वरूपश्चित्तावसाद इति भावः भवः भवनमिति भू धातोः ( उणादयोवहुलम् ) । ३ । ३ । १ । इति वाहुलकात् ( ऋदोरप् ) । ३ । ३ । ५७ । इत्यप् प्रत्यये गुणावादेशयोः रूपम् भवतीति ( विभाषाग्रहः ) । ३ । १ । १४३ । इत्यत्र ( भवतेश्चेति काशिका ) वा० इतिणप्रत्ययाभावे पचाद्यचिवारूपम् । भवः क्षेमेश संसारे सत्तायां प्राप्ति जन्मनोः । इति मेदिनी । जन्म हरौ भवौ । इत्यमरः । अर्थादुत्पत्तिः सत्तावा अभावः भवनमिति भूधातोः ( श्रिणीभुवोऽनुपसर्गे ) ।३।३।२४। इति घञ् प्रत्ययेञित्वात )अचोञ् णिति) इति वृद्धावावादेशेच भावः ण प्रत्ययेवा रूपम् सनभवतीति नञ् समासेनलोपेऽभावः । भावः सत्ता स्वभावाभिप्राय चेष्टात्म जन्मसु इत्यमरः क्रियालीला पदार्थेषु विभूति वन्धुजन्तुषु रत्यादौच ।

इति मेदिनी अर्थादनुत्पत्ति रसत्तेति भावः भयम् भयनमितिञिभीभये इति धातोः ( अज् विधौ भयादीना मुपसंख्यानम् ) ।वा०। इत्यच् प्रत्यये गुणेऽयादेशेच रूपम् । दर त्रासो भीतिर्भीः साध्वसंभयम् । इत्यमरः । भयं भीतौ भयंकरे । कुब्जक पुष्पे । इति हैमः । स्यादर्तन मृतीयाच गर्ह्य चाथ भयंभिया त्रासो त्रासौ दरो भीत मातङ्को भीश्चसाध्वसम् । इति शब्दार्णवः भयस्याभावःइतिनञ् समासेनलोपेऽभयम् ॥ ४ ॥

**अहिंसा समता तुष्टि स्तपो दानं यशोऽयशः ॥**
**भवन्ति भावा भूतानाम् मत्तएव पृथग् विधाः ॥ ५ ॥**

अहिंसा हिंसन मिति हिसि हिंसाया मिति धातोरिदित्वान्नुमितत: ( गुरोश्चहलः ) । ३ । ३ । १०३ । इत्यकार प्रत्यये टापि दीर्घे हिंसा । हिंसा चौर्यादि कर्मच । इत्यमरः । हिंसा चौर्यादि घातयोः । इति मेदिनी प्राण वियोगानुकूल व्यापार इति यावत् सानभवतीति नञ् समासे नलोपे रूपम् अर्थात् प्राणि जाता प्रपीडन मिति भावः समता समस्य तुल्यस्य भाव इति समश-ब्दात् ( तस्यभावस्त्वतलौ ) । ५ । १ । ११६ । इतितल् प्रत्यये तस्य स्त्रीत्वात् टापि दीर्घे रूपम् अर्थात् सर्वस्यैवात्मवद् दर्शनेन रागद्वेषादि शून्यावस्थेति भावः समतीति षम वैक्लव्ये इति धातोः पचादित्वादचि सम इति रूपम् । वाच्यलिंगाः समस्तुल्यः सदृक्षः सदृशः सदृक् । इत्यमरः तुष्टिः तोषणमिति स्त्रीत्वे भावे ( स्त्रियांक्तिन् ) । ३ । ३ । ९४ । इतिक्तिन् प्रत्यये गुणनिषेधेष्टुत्वे रूपम् अर्थात् नियति समुपस्थितार्थे मात्रा ल्हादना तपः तप्यते इति तप संतापे इति धातोरौणादिके ( सर्वधातुभ्योऽसुन् ) । ४ । १८९ । इत्यसुन् प्रत्यये रूपम् । तपः कृच्छ्रादि कर्मच । इत्यमरः । तपो लोकान्तरेऽपिच चान्द्रायणादौघनेच पुमान् शिशिरमाघयोः । इति मेदिनी अर्थात् शास्त्रोदित मार्गेण कायेन्द्रिय शोषणम् दानम् दीयते यदिति डुदाञ् दाने इति धातोर्बाहुलकात् कर्मणिल्यु-ट्यनादेशे दीर्घे रूपम्।दानं गजमदे त्यागे पालनच्छेद शुद्धिषु । इति विश्व मेदिन्यौ अर्थात् देशकाल विशेषेषु सच्छ्रद्धया यथा शक्त्यर्थादीनां सत् पात्रे वितरणम् यशः अश्नुते व्याप्नोतीति अशूङ् व्याप्ताविति धातोरौणादिके ( अशेर्देवनेयुट्च ) । ४ । १९१ । इत्यसुन् प्रत्यये धातोरादौयुडागमे रूपम् । यशः कीर्तिः समज्ञाच । इत्यमरः अर्थात् सद् धर्म कर्माचरणादिना लोक प्रसिद्धिः अयशः यशसोऽभाव इति नञ् समासे नलोपे रूपम् अर्थात् कदाचारादिना लोक विगर्हणम् एते सर्वे बुद्ध्यादयो भावाः विंशति संख्यकाः भूधातो र्भावे श्रिणीभुवोऽनुपसर्गे ) ।३।३।२४। इति घञ् प्रत्यये वृद्धावावादेशेच रूपम् भावयन्ते इति प्राप्त्यर्थात् चौरादिकाद् भावि धातोः पचाद्यचिणेर्लोपे रूपम् । भावः सत्ता स्वभावाभिप्राय चेष्टात्म जन्तुषु । इत्यमर मेदिन्यौ अर्थात् चेष्टाः पृथग् विधाः पृथग् भिन्ना विधा प्रकारोयेषामिति बहुव्रीहि समासे रूपम् प्राथयतीनि प्राथ्यते वेति प्रथ प्रख्याने इति चौरादिकाद् धातोरौणादिके ( प्रथेः कित् सम्प्रसारणंच )।१।१७०। इत्यजि प्रत्ययेणेर्लोपे रेफस्य ऋकारे सम्प्रसारणे पूर्व रूपे कित्वाद् गुणनिषेधे रूपम् ( स्वरादिनि-पात मव्ययम् ) । १ । १ । ३७ । इति स्वरादिषु पाठा दव्ययत्वम् पृथग् विनान्तरेणार्ते हिरुग

नाना च वर्जने। इत्यमरः। विधान मिति विपूर्वाद् धाञ् धातोः स्त्रीत्वेभावे आतश्चोपसर्गे। ३।३।१०६। इत्यङ् प्रत्यये (आतो लोप इटिच)। ६।४।६४। इत्याकार लोपे टापि दीर्घे विधेति अर्थाद् बहु प्रकाराः भूतानाम् प्राणिनाम् अभूवन् इति भूधातोः कर्तरि (गत्यर्थाकर्मक) ।३।४।७२। इत्यादिना कर्तरिक्त प्रत्यये तस्यार्ध धातुकत्वात् प्राप्तस्येटः (श्युकः किति) ।७।२।११। इति निषेधे गुण निषेधेच भूतानितेषाम् सम्बन्ध समान्ये षष्ठी कर्तरिवा वोध्या। भूतंक्ष्मादौपिशाचादौ जन्तौ क्लीवं त्रिपूचिते प्राप्तेवृत्ते समे सत्येदेव योन्यन्तरे तुना कुमारेऽपि। इति मेदिनी मत्तः परमेश्वरात् मदिति अस्मच्छब्दात् (पञ्चम्यास्तसिल्)।५।३।७। इति तसिल् प्रत्यये (प्रत्ययोत्तर पदयोश्च)।७।२।९८। इति मपर्यन्तस्यास्मच् छब्दस्य मादेशे पर रूपे चर्त्वेचरूपम् एवेति अवधारणार्थकमव्ययम् अयनमिति इण् गताविति धातो रौणादिके (इणशीभ्यांवन्)।१।१५२। इतिवन् प्रत्यये गुणे रूपम्। एवौपम्ये परिभवे ईषदर्थेऽवधारणे। इति हैमः (भुवः प्रभवः)।१।४।३१। इति (जनि कर्तुः प्रकृतिः)।१।४।३०। इतिवा स्मच्छब्दस्य अपादानत्वात् (अपादाने पंचमी)।२।३।२८। इति पञ्चमी भवन्ति समुत् पद्यन्ते प्रकाशन्तेवा भू सत्ताया मिति धातोः लटः प्रथम पुरुष वहुत्वेझौ तस्यान्ता देशे शपि गुणा-वादेशयो (अतोगुणे) इति पर रूपत्वे रूपम्॥५॥

**महर्षयः सप्तपूर्वे चत्वारो मनव स्तथा।**

**मद्भावा मानसा जाता येषां लोक इमाः प्रजाः॥६॥**

चत्वारः पूर्वे प्रथमा महर्षयः सनकाद्यास्तथा सप्तमहर्षयो भृग्वाद्याः चत्वारः पूर्वे मनवः सावर्णाद्याः चतुर्दश मनवः स्वायं भुवाद्याः ते सर्वे मद्भावाः सन्तो मानसाजाताः येषामयम् लोकः इमाः प्रजाः सन्तीत्यन्वयः॥६॥

चत्वारः चतुः संख्यकाः चतन्ते इति चते याचने इति धातो रौणादिके (चतेरुरन्) ।५। इत्युरन् प्रत्यये चतुर्शब्द स्ततः प्रथमा वहुत्वे जसि (सुडनपुंसकस्य)।१।१।४३। इति सर्व नामस्थान सञ्ज्ञायाम् (चतुरनडुहोरामुदात्तः)।७।१।९८। इत्यामागमेयणिरूपम् पूर्वे प्रथमाः पूर्वन्तीति पूर्वं पूरणे इति धातोः पचाद्यचिरूपम् पुंस्यादिः पूर्वं पौरस्त्य प्रथमाद्याः। इत्यमरः महर्षयः महान्तश्चते ऋषय इति (सन् महत् परमोत्तमोत् कृष्टाः पूज्यमानैः)।६।३।४६। समासे आन्महदित्यात्वे गुणे रूपम् ऋषन्तीति गत्यर्थात् ऋषीधातो स्तौदादिकात् (इगुपधात् कित्)।४।१२०। इत्यौणादिके इनि प्रत्यये तस्य कित्वाद्गुण निषेधे ऋषयः। ऋषयः सत्य वचसः। इत्यमरः। ऋषिर्वेदेवशिष्ठादौ दीधितौच पुमानयम्। इति मेदिनी अर्थात् सनक प्रभृतयः तथा सप्त संख्याकाः सपन्तीतिषप् समवाये इति धातो रौणादिके (सप्यशूभ्यांतुट्च) इति कनिन् प्रत्यये तुडागमे च सप्तेति महर्षयः भृगुप्रभृतयः तथाच पुराणम् भृगुं मरीचि मत्रिंच पुलस्त्यं पुलहं क्रतुम् वशिष्ठंच महा तेजाः सोऽसृजन् मनसा सुतान् सप्त ब्राह्मणा इत्येते पुराणेनिश्चयं-

गताः इति अर्थात् वेदतदर्थद्रष्टारः सम्प्रदाय प्रवर्तकाः सर्गाद्यकालाविर्भूताः एते इति भावः मनवः स्वायं भुवाद्याः चतुर्दश मन्यन्ते इति मनज्ञाने इति धातोः ( शृस्वृस्निहि त्रप्यसिवसिहनि क्लिदि वन्धि मनिभ्यश्च ) इत्यौणादिके उप्रत्यये रूपम् अर्थात् मन्त्र तत्वार्थज्ञाः सृष्टि हेतव एते इति भावः सर्वेप्यते मद्भावाः मयि परमात्मनि भावो भावना येषा मिति व्यधिकरण पूर्वपद बहुव्रीहि समासे रूपम् यद्वाह मेव भावः क्रिया विभूतिर्वा येषांते इति बहुव्रीहि समासे ( प्रत्ययोत्तर पदयोश्च ) । ७ । २ । ९८ । इति मपर्य्यन्तस्यास्मच्छब्दस्यमादेशे अतोगुणे इति पर रूपत्वे रूपम् अर्थात् मच् चिन्तनत्वात् मदात्मत्वाच्च मन्निष्ठ ज्ञानैश्वर्य शक्तयः इति भावः भवनमिति भूधातोः ( श्रिणीभुवोऽनुपसर्गे ) । ३ । ३ । २४ । इति घञ् प्रत्यये रूपम् । भावः सत्ता स्वभावाभिप्राय चेष्टात्म जन्मसु क्रिया लीला पदार्थेषु विभूति बन्धु जन्तुषु । इति मेदिनी मानसाः मनसश्चेतसः प्रभूता इति मनः शब्दात् ( प्रभवति ) । ५ । ३ । ८३ । इत्यण् प्रत्यये आद्यचोवृद्धौरूपम् अर्थान्मनः संकल्पोत्पन्नत्वेन अयोनिजा इतिभावः मन्यतेऽनेनेतिमन् धातो रौणादिके ( सर्वधातुभ्योऽसुन् ) । ४ । १८९ । इत्यसुन् प्रत्यये मन इति । मनश्चित्ते मनीषायाम् । इति कोषान्तरम् जाताः समुत्पन्ना अजनिषत इति जनी प्रादुर्भावे इति धातोः ( गत्यर्थाकर्मक ) इत्यादिना कर्तरिक्तप्रत्यये (श्वीदितो निष्ठायाम्)। ७ । २ । १४ । इति वलादिलक्षणेटोनिषेधे ( जन सनखनक्रमं सन् झलोः ) । ६ । ४ । ४२ । इति नकारस्यात्वे दीर्घे रूपम् येषाम् महर्षिप्रभृतीनाम् ( कर्तृ कर्मणोः कृति ) इति कर्तरिषष्ठी यद्वा येभ्य इति अपादानत्वाविवक्षायाम् ( कर्मा दीनामपि सम्बन्ध मात्र विवक्षायाम् षष्ठ्येव ) । वा० । इति शेषेषष्ठी अयं लोकः भुवनम् लोक्यते इति लोकृदर्शने इतिधातोः ( अकर्तरिच कारके संज्ञायाम् ) । ३ । ३ । १९ । इति घञ् प्रत्यये रूपम् लोकस्तु भुवनेजने । इत्यमरः इमा एताः प्रजाः सन्ततयोजनावा प्रजायन्ते स्मेति प्रोपसृष्टात् जन धातोः ( उपसर्गे च संज्ञायाम् ) । ३ । २ । ९९ । इतिड प्रत्यये टेर्लोपेटापिदीर्घे रूपम् । प्रजास्यात् संततौ जने । इत्यमरः अर्थात् प्रसिद्धमहिमानोऽप्येते यतोमामेवोपासते अतस्त्वमपि मामुपास्वेति भावः ॥ ६ ॥

**एतां विभूतिं योगंच ममयोवेत्ति तत्वतः ।**
**सोऽविकम्पेन योगेन युज्यते नात्र संशयः ॥ ७ ॥**

यः कश्चित् पुरुषर्षभः मम परमेश्वरस्यैतां विभूतिम योगंच तत्त्वतो वेत्ति सोऽविकम्पेन योगेन युज्यते एव अत्र संशयो नास्तीतिशेषः ॥ ७ ॥

यजति इज्यतेवेति यज देव पूजा संगति करणाद्यर्थाद् धातो रौणादिके त्यजितनि यजिभ्योडित्, इत्यदिप्रत्यये तस्य डित्वाट्टेर्लोपे यच्छब्दः ततः प्रातिपदिकत्वात् पुँस्त्वे सौ त्यदाद्यत्वे पररूपत्वे रुत्वविसर्गयो रूपम् कश्चित् पुरुष विशेषः मम परमेश्वरस्य ( कर्तृ कर्मणोः कृति ) । २ । ३ । ६५ । इति अस्मच्छब्दात् कर्तरिषष्ठी पादादित्वात् ( तेमयावेकवचनस्य ) इति ते

आदेशाभावः एताम् मत् कर्तृकत्वेन मत् सम्बन्धिनीम् विभूतिम् विशेषेण भवनमिति विपूर्वाद् भूधातोः ( स्त्रियांक्तिन् ) । ३ । ३ । ९४ । इतिक्तिन् प्रत्यये तस्यार्धधातुकत्वात् प्राप्तस्येटः ( तितुत्रतथ सिसुसर कसेषुच ) । ७ । २ । ९ । इति निषेधे कित्वाद् गुणनिषेधे च विभूतिस्ताम् कर्मणि द्वितीया अर्थाद् बुद्धि प्रभृति सर्वम् मदैश्वर्य मितिभावः च पुनरर्थेऽव्ययम् योगम् योजनमिति युज्यतेऽनेनास्मिन्निति वेति योगार्थाद् युजिर्धातोः समाध्यर्थाद् युजधातोर्वा ( भावे ) । ३ । ३ । १८ । इति ( हलश्च ) ३ । ३ । १२१ । इति वाघञ् प्रत्यये लघूपध गुणे ( चजोः ) । ७ । ३ । ५२ । इत्यादिना कुत्वे योगस्तम् । योगः संनहनोपाय ध्यान संगति युक्तिषु । इत्यमरः । योगोऽपूर्वार्थ सम्प्राप्तौ संगति ध्यानयुक्तिषु वपुः स्थैर्ये प्रयोगेच विष्कम्भादिषु भेषजे विश्रब्ध घातके द्रव्योपायसंनहनेष्वपि । इति मेदिनी अर्थाद् विश्वतोमुखे भगवति चेतः समाधानम् तत्तदर्थ निर्मिति सामर्थ्यं वेति भावः तत्वतः तत्वेनेति तृतीयान्तात् तत्व शब्दात् ( अतिग्रहाव्य-थनक्षेपेष्वकर्तरि तृतीयायाः ) । ५ । ४ । ४६ । इति तसि प्रत्यये ऽव्ययत्वम् तस्य ब्रह्मणो भाव इति तच्छब्दात् ( तस्यभावस्त्वतलौ ) । ५ । १ । ११९ । इति त्व प्रत्यये चर्त्वेचतत्वम् । तत्त्वं परात्मनि वाद्य भेदे स्वरूपेच । इति हैमः अर्थाद् ब्रह्मस्वरूपेणेति भावः वेत्ति जानाति विद ज्ञाने इति धातोर्लटः प्रथम पुरुषै कत्वेतिपितस्य सार्वधातुकत्वात् जातस्य शपोऽदादित्वाल्लुकि विदो-लटोवा ) । ३ । ४ । ८३ । इति पक्षान्तरे लघूपधगुणेचर्त्वेच रूपम् सः अविकम्पेन विकम्पते इति विपूर्वात् कपि संचलने इति धातोः कर्तरि पचाद्यचि विकम्पन मिति ( भावे ) । ३ । ३ ।१८। इति घञि विकम्प्यते येन यस्मिन्निति ( हलश्च ) । ३ । ३ । १२१ । इति वाघञ् प्रत्यये विकम्पः सोऽविद्यमानोऽस्मिन्निति ( नञोऽस्त्यर्थानां वाच्यो वाचोत्तर पद लोपः ) । वा० । इति बहुव्रीहि समासे नञोनस्य लोपे ऽविकम्प स्तेन नञ् समासे वारूपम् निश्चलेनेति भावः यद्वा अततीति सातत्य गमनार्थादत् धातो रौणादिके बाहुलकाद्ड प्रत्ययेटेर्लोपे अः । अकरो वासुदेवः स्यात् । इत्येकाक्षर कोषः तस्मिन् मयि वासुदेवे विनष्टा कम्पाकम्पोऽस्थिरता यस्मादिति ( प्रादिभ्यो धातु जस्य वाच्यो वाचोत्तरपद लोपः । वा० । इति बहुव्रीहि समासे सप्तमीति योगविभागात् समासे चाविकम्पस्तेन अर्थात् मय्यनन्यभावात् सुस्थिरेण यद्वा अवन्ति रक्षन्ति लोकान् इति अव्यते रक्ष्यते लोको यैस्तं इति रक्षणार्थादव् धातो रौणादिके ( सर्वं धातुभ्य इन् ) । ४ । ११ ।८। इतीन् प्रत्यये ऽवयः लोकनाथाः इन्द्रादयः । अविर्नाथे रवौ मेषे शैले मूषिक कम्पले । इति मेदिनी । अवयः शैल मेषार्का । इत्यमरः अवीनां नाथानामिन्द्रादि लोक पालानाम् जडी भूतानां शैलानामपि कम्पो वेपथुर्यस्मादिति व्यधिकरणपदबहुव्रीहि समासे ऽविकम्पस्तेन अर्थात् लोक पालादीनामपिक्षोभकत्वादत्युग्रे णेति भावः तथा भूतेन योगेन समाधिना सम्यग् दर्शन स्थैर्यलक्ष-णेन ध्यानेन अपूर्वार्थ प्राप्त्यावा युज्यते युक्तो भवति युजिर्योगे इतिधातोः कर्मणि लटः प्रथम पुरुषैकत्वे ( भावकर्मणोः ) । १ । ३ । १३ । इत्यात्मने पद संज्ञके तादेशे टेरेत्वे ( सार्व-धातुकेयक् ) । ३ । १ । ६७ । इति यक् प्रत्यये तस्य कित्वाद् गुण निषेधे रूपम् अत्रै तस्मिन् विषये एतच्छब्दात् ( सप्तम्यास्त्रल् ) । ५ । ३ । १० इति त्रल् प्रत्यये ( प्राग् दिशोविभक्तिः ) ।

५।३।१। इति विभक्ति संज्ञायाम् ( अन् ) ।५।३।५। इति अनेकाल्त्वात् सर्वादेशे पदत्वात् नकार लोपे तद्धिश्चासर्वं विभक्तिः )।१।१।३८। इत्यव्ययत्वम् संशयः संदेहोनास्ति संशयनमिति संपूर्वात् शीङ्स्वप्ने इतिधातोः ( एरच् ) ।३।३।५६। इत्यच् प्रत्यये गुणाया देशयोः रूपम् । विचिकित्सा तु संशयः संदेह द्वापरौ । इत्यमरः ॥ ७ ॥

**अहं सर्वस्य प्रभवः मत्तः सर्वं प्रवर्तते ।**
**इति मत्वा भजन्ते माम् बुधा भाव समन्विताः ॥ ८ ॥**

अहं परमेश्वरः सर्वस्य प्रभवोऽस्मि मत्तः परमेश्वरादेव सर्वं प्रवर्तते इतीत्थम् मत्वावगम्य भाव समन्विताः बुधाः माम् परमेश्वरं भजन्ते इत्यन्वयः ॥ ८ ॥

सम्प्रत्युपासनास्वरूपं दर्शयन् नाह अहं सर्वस्येति द्वाभ्याम ।

अहं अर्थात् वासुदेवाख्यं परंब्रह्म सर्वस्य निखिलस्य चराचरात्मकस्यजगतः सृत मनेनेति सृगता वितिधातो रौणादिकः ( सर्वं निघृश्च ) इत्यादिवन् प्रत्ययान्तोनिपातः, सर्वति गच्छति स्वस्वकर्मानुकूलां गति मिति सर्वगता वितिधातोः पचाद्यचिवा सर्वम् ततः ( कर्तृ कर्मणोः कृति )।२।३।६५। इति कर्तरि षष्ठी प्रभवः प्रभूयते यस्मादिति प्रपूर्वाद् भूधातोः ( ऋदोरप् )।३।३।५७। इत्यप्प्रत्यये गुणावादेशयोः रूपम् । स्याज् जन्महेतुः प्रभवः । इत्यमरः ! प्रभवो जलमूलेस्यात् जन्महेतौ पराक्रमे ज्ञानस्य चादिमेस्थाने ! इति मेदिनी अर्थात् सर्वस्यैवाह मेव जन्म हेतुर्ज्ञानस्यादिम स्थानं वेति भावः ( सर्वं खल्विदं ब्रह्मेति श्रुतिः नच बुद्धया दीनां जगतः साक्षाज् जनकत्वेन भवतोऽन्यथा सिद्धत्व मिति वाच्यम् यतः मत्तः परमेश्वरात् मां प्राप्यैवेति यावत् पञ्चम्यन्ता दस्मच्छब्दात् ( पञ्चम्या स्तसिल् ) ।५।३।७। इति तसिल् प्रत्यये ( प्रत्ययोत्तरपदयोश्च )।७।२।९८। इति मपर्यन्तस्यमादेशे पररूपे चत्वेंऽव्ययत्वम् अत्र ( ल्यब्लोपे कर्मण्यधिकरणेच )।वा०। इति कर्मणि पंचमी सर्वं बुद्धयादिकम् प्रवर्तते अर्थात् स्वस्वकार्येषु प्रवर्तितं भवति मदनुग्रह मन्तरेण बुद्धयादेः कार्यकरण क्षमता नास्तीति नाह मन्यथा सिद्धः किन्तु साक्षादुपादानकारण निमित्तकारण रूप एवास्मीति भावः इतीत्थम् एतु अयतादिति इणगतावित्ति कटीत्यत्र प्रश्लिष्टादिधातोर्वा ( क्तिचक्तौच संज्ञायाम् ) ।३।३।१७४। इतिक्तिच् प्रत्यये गुणनिषेधे रूपम्। इति हेतु प्रकरण प्रकाशादि समाप्तिषु । इत्यमरः। इति प्रकरणे हेतौ प्रकाशादि समाप्तिषु निदर्शने प्रकारेस्यादनुकर्षे च संमतम् । इति विश्वः मत्वावमत्य मनु धातोः समान कर्तृकयोः पूर्व काले)।३।४।२१। इतिक्त्वा प्रत्यये तस्य कित्वात् ( अनुदात्तोपदेशवनति ) ।६।४।३७। इत्यादिना नकारलोपे रूपम् भावसमन्विताः भावेनार्थात् परमेश्वर एव सर्वस्योत्पत्ति स्थितिलयकारण मित्येतद् रूपेणाभिप्रायेण समन्विताः सम्यग् युक्ता इति ( कर्तृ करणे कृता वहुलम् ) ।२।१।३२। इति समासे रूपम् यद्वा समन्वितो भावो येषां ते इति ( जाति काल सुखादिभ्यः परानिष्ठा वाच्या )।वा०। इति सुखादेरा

कृति गणत्वात् ( वाहिताग्न्यादिषु ) । १ २ । ३७ । इति । आहिताग्न्यादेराकृति गणत्वात् निष्ठान्तस्य परनिपातेरूपम्, भाव्यते विचार्यते यस्मिन्निति येनेतिवाणिजन्ताद् भाविधातोः ( एरच् ) । ३ । ३ । ५६ । इत्यच्प्रत्यये तस्यार्धधातुकत्वात् णेर्लोपे भावः । भावोऽभिप्रायवस्तुनोः । इति हैमः समनुपूर्वात् इणगतावित्ति धातोः ( निष्ठा ) । ३ । २ । १०२ । इति कर्मणि ( गत्यर्थाकर्मक ) इत्यादिना कर्त्तरि वाक्तप्रत्ययेगुणनिषेधे यणि समन्विता इति बुधाः बुध्यन्ते इति बुध अवगमने इति धातोः ( इगुपधज्ञाप्रीकिरः कः ) । ३ । १ । १३५ । इतिक प्रत्यये बुधाः। सन् सुधी कोविदो बुधः । इत्यमरः अर्थात् सदसद् विवेक विचारचणाः मां परमेश्वरम् भजन्ते सेवन्ते भज धातो रात्मगामिनि क्रियाफले लटः प्रथमपुरुषबहुत्वे झोतस्यान्तादेशे सार्वधातुकत्वाच्छपि पररूपेरूपम् ।

**मच्चिता मद्गत प्राणाः बोधयन्तः परस्परम् ।**
**कथयन्तश्च मांनित्यं तुष्यन्ति च रमन्ति च ॥ ६ ॥**

मच्चित्ता मद्गत प्राणाः परस्परं मां बोधयन्तस्तथा मामेव नित्यम् कथयन्तः साधवस्तुष्यन्ति तेनैवच रमन्तोत्यन्वयः ॥ ६ ॥

मच्चित्ताः मयि वासुदेवे चित्तंचेतो येषामिति सप्तमी विशेषणे बहुव्रीहौ, । २ । २ । ३५ । इति सप्तम्यन्तस्य पूर्वं निपातनाल् लिङ्गाद् व्यधिकरणपद बहुव्रीहि समासे ( प्रत्ययोत्तर पदयोश्च ) । ७ । २ । ६८ ॥ इति मपर्य्यन्तास्मच्छब्दस्य मादेशे पररूपे चुत्वे चर्वेच रूपम् यद्वा हमेव चित्ते येषामिति ( वाहिताग्न्यादिषु ) । २ । २ । ३७ । इत्याहिताग्न्यादेराकृतिगणत्वात् संप्तभ्यन्तस्य पूर्वनिपाताभावे रूपम् सदामन्मनस्का इतिभावः चिती संज्ञाने इति धातोः कर्मणोऽविवक्षायामकर्मकत्वात् भावे ( निष्ठा ) । ३ । २ । १०२ । इति गत्यर्थाकर्मक, इत्यादिना कर्तरिवाक्त प्रत्यये ( श्वीदितो निष्ठायाम् ) ७ । २ १४ । इति वलादिलक्षणेटोनिषेधे गुणनिषेधेच चित्तमिति " चित्तं तु चेतो हृदयम् " इत्यमरः मद्गत प्राणाः मयिगता इति सप्तमीतियोग विभागात् मांगता इति ( द्वितीयाश्रितातीतपतितगता ) । २ । १ । २४ । इत्यादिना वासमासे मद्गतास्तथाभूताः प्राणा असवोयेषामिति बहुव्रीहि समासे रूपम् गम्धातोर्गत्यर्थत्वेन ( गत्यर्थाकर्मकेत्यादिना कर्तरिक्त प्रत्यये एकाच्त्वादिड् निषेधे अनुदात्तोपदेशवनतितनोत्यादीनाम् ) ॥ ६ । ४ । ३७ । इत्यादिना मकारलोपे गता इति प्राणन्तीति प्रोपसृष्टा दन प्राणने इति धातोः पचाद्यचि प्राणनानि प्राणन्त्येभि रिति ( भावे ) । ३ । ३ । १८ । ( हलश्च ) । ३ । ३ । १२१ । इति वाघञ् प्रत्यये ( अनितेः ) । ८ । ४ । १६ । इतिणत्वे रूपम् " पुंसिभून्म्यसवः प्राणाः " इत्यमरः " प्राणो हृन्मारुते बोले काव्यजीवे ऽनिले वले पुल्लिङ्गः पूरिते वाच्य लिङ्गः पुंभून्मिचासुषु " इति मेदिनी * यद्वाह मेवगतो विद्यमानो येषु इति मद्गतास्तथा भूताः प्राणा इन्द्रियव्यापारा येषामितिरूपम् अर्थान्मनसा चक्षुरादीन्द्रियैर्वा यदनुभूयते तत्

सर्वम् प्रत्यगात्मा परमेश्वर इति विमर्षयन्त . इतिभावः परस्परमन्योन्यम् परञ्च परञ्चेति ( कर्म-व्यतिहारे सर्वनाम्नोद्वे वाच्ये )। वा०। ( समासवच्च बहुलम् )। वा० इति पर शब्दस्य द्वित्वे बहुलग्रहणादन्यपरयोर्न समासवत् इति ( असमासवद् भावे पूर्व पदस्य सुपः सुर्वक्तव्यः )। वा०। इत्यमः स्वादेशे तस्यरूत्वविसर्गयोः ( कस्कादिषु च )। ८। ३ । ४८ । इति सत्वे परस्पर मिति अर्थात् पूर्वोक्त मेवार्थमन्योन्यम् श्रुतियुक्तिप्रदर्शनेन सदृक्समुदायम् बोधयन्तोज्ञाप-यन्तः बोधयन्तीति प्रयोजक णिजन्ता दवगमनार्थाद् बोधि धातोर्लटः ( लटः शतृ शानचौ )। ३। २। १२४। इत्यादिनाशतृ प्रत्यये सार्वधातुकत्वाच्छपि गुणायादेशयोः पररूपे प्रथमा बहुत्वे रूपम् * यद्वा परस्परो जनो मां बुध्यते तं प्रेरयन्त इति ( गति बुद्धि प्रत्यवसानार्थ शब्द कर्माकर्मकाणामणि कर्ता सणौ )। १। ४। ५२। इत्यणौकर्तुर्णौ कर्मत्वे कर्मणि द्वितीयेति परस्पर शब्दाद् द्वितीया च पुनरर्थेऽव्ययम् मां परमेश्वरम् उपदेशभाजनभूतेभ्यः शिष्यादिभ्यो नित्य मनवरतम् यथा तथा यद्वा नित्यं सनातनं निश्चित इति ( त्यब्नेर्ध्रुव इति वक्तव्यम् )। वा०। इतित्यप् प्रत्यये रूपम् " नित्यानवरताजस्रम् " इति "शाश्वतस्तु ध्रुवो नित्य सदातन सनातना" इत्युभयत्राप्यमरः कथयन्तः कथयन्तीति वाक्य प्रबन्धार्थात् स्वार्थणिजन्तात् कथि धातोः पूर्व-वल्लटः शत्रा देशादि कार्ये रूपम् तथाच तेन परस्परं समानेषु मद्बोधनेन शिष्यादिषुच सदा सर्वत्राभिव्यापकस्य ममैवोपदेशेन तुष्यन्ति प्रीयन्ते तुषतुष्टाविति धातोर्लटः प्रथम पुरुष बहुत्वे झौ तस्यान्तादेशे दिवादित्वाच्छ्यनि पररूपे रूपम् अर्थादेतादृग् मद्भजनेन संतोष मुपयान्ति नत्विन्द्रियाकर्षकमिष्टान्नादिनेतिभावः तथा तेनैव संतोषेण रमन्ति रमन्ते रमुक्रीडायामिति धातोर्लटः आर्षत्वात् परस्मैपद संज्ञक प्रथमपुरुष बहुत्वेझौ तस्यान्तादेशे शपि पररूपे रूपम् * यद्वा चक्षिङोङित्करणेनानुदात्तेत्वप्रयुक्तात्मनेपदस्यानित्यत्वाद् रूपम् तदुक्तम् पतञ्जलिना " सन्तोषादनुत्तमः सुखलाभः " इति उक्तंच पुराणे " यच्चकाम सुखं लोके यच्च दिव्यं महत् सुखम् तृष्णाक्षयसुखस्यैते नार्हतः षोडशीं कलाम् इति ॥ ९ ॥

**तेषां सतत युक्तानां भजतां प्रीति पूर्वकम् ॥**
**ददामि बुद्धि योगंतम् येनमा मुपयान्तिते ॥ १० ॥**

प्रीतिपूर्वकं यथातथा भजताम् संतत युक्तानाम् तेषाम् तम् बुद्धि योगं ददामि येन बुद्धियोगेन ते मा मुपयान्तीत्यन्वयः ॥ १० ॥

प्रीतिर्मुत् प्रेमा वा पूर्वा प्रथमा यस्मिन् कर्मणीति ( अनेक मन्यपदार्थे )। २। २।२४। इति बहुव्रीहि समासे ( शेषाद्विभाषा )। ५। ४। १५४। इति वैभाषिके कप् प्रत्यये ( केऽणः ) ।७।४। १३। इति ह्रस्वस्य ( नकपि )।७।४। १४ । इति निषेधे ( आपोऽन्यतरस्याम् ) ।७४।१५ । इति वैभाषिके ह्रस्वे क्रियाविशेषणत्यात् द्वितीयैकत्वेरूपम् प्रयणमिति प्रीङ् प्रीताविति धातोः ( स्त्रियांक्तिन् )। ३। ३ ९४। इतिक्तिन् प्रत्यये गुण निषेधे रूपम " मुत् प्रीति

प्रमदो हर्षप्रमोदामोदसम्मुदाः" इत्यमरः "प्रीतिर्योगान्तरे प्रेम्णिस्मरपत्नीमुदोः स्त्रियाम्" इति मेदिनी पूर्वतीति पुर्वपूरणे इतिधातोः पचादित्वादचि (हलिच) इति दीर्घे रूपम् "पूर्वो ऽन्यलिङ्गः प्रागाह पुंबहुत्वे तु पूर्वजान्" इत्यमरः "पूर्वेतु पूर्वजेपुस्युः पूर्वः प्रागाद्ययोस्त्रिपु" इति मेदिनी "प्राक्पूर्व मग्रतः" इति धरणिः सस्नेहम् सहर्षम् वा यथातथा माम् परमेश्वरम् भजताम् सेवमानानाम् भजन्तीति भज्धातोः लटः (लटः शतृशानचौ)। ३। २। १२४। इति शत्रादेशे सार्वधातुकत्वाच् छपि पररूपे ततः षष्ठी बहुत्वे आमि रूपम् सतत युक्तानाम् सतत मनारतं यथातथा युक्ता इति द्वितीयेति योगविभागात् समासे सततयुक्ता स्तेषाम् अर्थादनवरतसमाधिस्थानाम् संतनन मिति सम्पूर्वात् तनुविस्तारे इति धातोः (नपुंसके भावेक्तः) इतिक्त प्रत्यये (वितुत्रतथ)। ७। २। ६। इतीड् निषेधे (अनुदात्तोपदेशवनति तनोत्या दीनाम्)। ६। ४। ३७। इत्यादिना नकारलोपे (समोवाहिततयोः)। वा०। ६। १। १४४। इति मकारलोपे रूपम् "सततानारता श्रान्त संततावरतानिशम्" इत्यमरः अयोजीति युज् धातोः कर्मणि (निष्ठा)। ३। २। १०२। इति निष्ठा संज्ञकेक्त प्रत्यये एकाच्त्वादिण्निषेधे प्रत्ययस्य कित्वाद् गुणनिषेधे कुत्वे चर्त्वेच युक्त इति कर्मणो ऽविवक्षया कर्मकत्वात् कर्तरिवा गत्यर्थाकर्मकेतिक्त प्रत्ययेरूपम् * यद्वा तन्यते स्मेति कर्मणिक्त प्रत्ययेततम् "ततं व्याप्ते विस्तृतेचत्रिलिङ्गकम् क्लीवं वीणादि वाद्ये स्यात् पुंल्लिङ्गस्तु सदागतौ" इतिमेदिनी तेन ततेनार्थात् मनोवाक्कर्मतः सर्वतोभावेन विस्तृतेन सहवर्तमान मिति (तेन सहेतितुल्ययोगे)। २। २। २८। इति बहुव्रीहि समासे (वोपसर्जनस्य)। ६। ३। ८२। इति सह शब्दस्य सादेशे सततम् सविस्तरम् तथाभूतं युक्तम् योगो येषामिति पूर्ववत् समासे तेषाम् योजनं युक्तम् युजिर योगेधातोः (नपुं)। ३। ३। ११४ इतिक्त प्रत्यये रूपम् तथा भूतानां तेषाम् अर्थात् तेभ्यः तच्छब्दात् सम्प्रदानत्वाविवक्षायां शेषे षष्ठी अहम् परमेश्वरः तम् पूर्वोक्तम् अविकम्प लक्षणम् बुद्धियोगम् बुद्धेर्योग इति षष्ठीति समासे बुद्धियोगस्तम् अर्थात् मत्तत्त्व विषय दर्शनम् ज्ञानमयं योगम् इतिभावः बोधनमिति बुध्धातोः (स्त्रियांक्तिन्) इतिक्तिन् प्रत्ययेरूपम् युज्धातोः पूर्ववत् घञ्प्रत्यये तन्निमित्तके कार्येच योग इति ददामि डुदाञ् दाने इति धातोर्लट उत्तमपुरुषैकत्वे परगामिनि क्रियाफले मिपि तस्य सार्वधातुकत्वाच्छपि तस्य (जुहोत्यादिभ्यः श्लुः) इति श्लुः (प्रत्ययस्य लुक् श्लुलुपः) इति श्लु संज्ञायाम् (श्लौ) इति धातोर्द्वित्वेऽभ्यास कार्ये रूपम् येन साधनीभूतेन बुद्धियोगेन सम्यग्दर्शनलक्षणेन मां परमेश्वरम् आत्मस्वरूप मितियावत् नद्यः समुद्रमिवतादात्म्येनोपयान्ति प्रतिपद्यन्ते उपपूर्वाद् या प्रापणे इति धातोर्लटः प्रथम पुरुष बहुत्वे झोतस्यान्तादेशे सार्वधातुकत्वेन शपि तस्यादादित्वात् लुकि दीर्घे रूपम्॥ १०॥

**तेषामेवानुकम्पार्थं महमज्ञानजं तमः ॥**
**नाशयाम्यात्म भावस्थो ज्ञानदीपेन भास्वता ॥ ११ ॥**

अहं परमेश्वरः तेषामेव भक्तानामनुकम्पार्थम् आत्मभावस्थः सन् भास्वताज्ञानदीपेन अज्ञानजंतमो नाशयामीत्यन्वयः ॥ ११ ॥

ननु यान्ति मद्याजिनोऽपिमामिति पुरोक्तत्वेन भवद्भक्ता भवन्तम् समयन्त एव पुनः किम्फलकं तेभ्यो बुद्धियोगवितरणमित्यत आह तेषामेवानु कम्पार्थं मित्यादिना अहं परमेश्वरः तेषाम् तच्छब्दोऽत्र पूर्वपरामर्शकः अर्थात् सततयुक्तानां प्रीतिपूर्वकं भजताम् मद्याजिनाम् एव " एवौपम्ये परिभवे ईषदर्थेऽवधारणे " इति हैमः अत्रावधारणार्थक एव शब्दः अनुकम्पार्थम् अनुकम्पादयैवार्थः प्रयोजनं यस्मिन् कर्मणीति बहुव्रीहि समासे क्रिया विशेषणत्वाद् द्वितीया * यद्वा अनुकम्पायै अयमिति ( चतुर्थी तदर्थार्थ बलिहित सुखरक्षितैः ) । २ । १ । ३६ । इत्यत्र ( अर्थेन नित्यसमासो विशेष्यलिङ्गताच ) । वा० । इति अश्वपद नित्यसमासे ऽनुकम्पार्थस्तम् कर्मणि द्वितीया तथाचास्याध्याहार्यमाणस्य बुद्धियोगं दत्वेत्येनद् घटकीभूतबुद्धियोगस्य विशेषण मवगन्तव्यम् अनुकम्पन मिति अनुपूर्वात् कपि संचलने इति धातोरिदित्वान्नुमि ततः ( गुरोश्चहलः ) । ३ । ३ । १०३ । इत्यकार प्रत्यये टापि दीर्घे रूपम् " कृपादयानुकम्पा " इत्यमरः अर्यते ऋच्छतिवेति ऋगताविति धातोरौणादिके ( उषि कुशिगार्तिभ्यस्थन् ) । २ । ४ । इतिथन्प्रत्यये गुणेरपरेरूपम् " अर्थोऽभिधेयरै वस्तु प्रयोजन निवृत्तिपु " इत्यमरः " अर्थो विषयार्थनयोर्धनकारणवस्तुषु अभिधेयेच शब्दानां निवृत्तौ च प्रयोजने " इति मेदिनी अर्थ्यते इति स्वार्थणिजन्तात् अर्थ उपयाञ्चायामिति धातोः ( अकर्त रिचकारके संज्ञायाम् ) । ३ । ३ । १९ । इति घञ् प्रत्यये तस्यार्धधातुकत्वाद्णेर्लोपे अर्थः आत्मभावस्थः आत्मनो बुद्धेर्भावो ऽभिप्रायोऽर्थाद्वृत्तिरिति षष्ठीति समासे आत्मभावस्तत्र- तिष्ठतीति ष्ठागति निवृत्ताविति धातोः ( सुपिस्थः ) । ३ । २ । ४ । इतिकप्रत्यये ( आतोलोप इटिच ) । ६ । ४ । ६४ । इत्याकारलोपे उपपदसमासे रूपम् अततीत्यात्मा " आत्माकलेवरे यत्ने स्वभावे परमात्मनि चित्ते धृतौच बुद्धौच परव्यावर्तने ऽपिच " इति धरणिः भाव्यते प्रकाश्यते इति भाविधातोः ( अकर्तरिच ) । ३ । ३ । १९ । इति घञ् प्रत्ययेणेर्लोपे रूपम् " भावः सत्ता स्वभावाभिप्राय " इति मेदिनी भास्वता दीप्यमानेन भासते इति भासृदीप्ताविति धातोः (क्विप् च) । ३ । २ । ७६ । इति क्विप् प्रत्यये भाः " भाःप्रभावे मयूखेच " इति कोशान्तरम् " भाश्छविद्युति दीप्तयः " इत्यमरः साधियते यस्य यस्मिन् वेति ( तदस्यास्त्यस्मिन्निति मतुप् ) । ५ । २ । ९४ । इति मतुप् प्रत्यये ( मादुपधायाश्च मतोर्वोऽयवादिभ्यः ) इति मस्यवत्वे ( तसौमत्वर्थे ) । १ । ४ । १९ । इतिभत्वाद्रुत्वा भावे भास्वाँस्तेन ज्ञानदीपेन ज्ञानं तत्वावबोधः अर्थात् " एकमेवाद्वितीयं ब्रह्मनेहनानास्ति किंचन " इत्यादि रूपः तदेव दीप इव प्रकाशकत्वात् इति कर्म

धारयसमासेऽज्ञानदीपस्तेन साधनीभूतेन ज्ञायतेऽनेनेतिज्ञाधातोः ( करणाधिकरणयोश्च ) । ३ । ३ । ११७ । इति करणेल्युट्यनादेशेरूपम् दीप्यते प्रकाश्यतेऽर्थो येनेति प्रयोजकणिजन्ताद् दीपिधातोः ( अकर्तरिच ) । ३ । ३ । १९ । इति घञ् प्रत्यये णेर्लोपे रूपम् " दीपस्तुस्नेहाशः कज्जलध्वजः दशेन्धनोगृहमणिर्दोषातिलक इत्यपि " इति त्रिकाण्डशेषः अज्ञानजम् अज्ञानाज् जातमिति जनीप्रादुर्भावे इतिधातोः ( पञ्चम्यामजातौ ) । ३ । २ । ९८ । इतिडप्रत्यये टेर्लोपे-रूपम् नज्ञानमिति नञ् समासेऽज्ञानम् तथा भूतं तमः ध्वान्तम् ताम्यतीति तमुग्लाना-वितिधातो रौणादिके ( सर्वधातुभ्योऽसुन् ) । ४ । १८९ । इत्यसुन्प्रत्यये रूपम् " तमोध्वान्ते गुणे शोके क्लीवं वा ना विधुन्तुदे " इति मेदिनी नाशयामि नाशं गमयामीत्यर्थः प्रयोजकणिज-न्ताद्णश अदर्शनेनाशीत्यस्मात् लटः परगामिक्रियाफले उत्तमपुरुषैकत्वे मिपि सार्वधातु-कत्वाच् छपि गुणायादेशयो रङ्गत्वात् ( अतो दीर्घो यञि ) । ७ । ३ । १०३ । इति दीर्घे रूपम् ॥ ११ ॥

**परंब्रह्म परंधाम पवित्रं परमं भवान् ॥**
**पुरुषं शाश्वतं दिव्य मादिदेव मजंविभुम् ॥ १२ ॥**
**आहुस्त्वा मृषय सर्वे देवर्षिर्नारदस्तथा ॥**
**असितो देवलोव्यासः स्वयं चैव ब्रवीषिमे ॥ १३ ॥**

द्वाभ्यां युग्मक माह भवान् परंब्रह्म परंधाम परमं पवित्र मसि एवमेव सर्वे ऋषयो देवर्षिर्नारदस्तथा असितः देवलः व्यासश्चैते पित्वां पुरुषं शाश्वतं दिव्यं आदिदेवं अजं विभुमाहुः चपुन स्वयं साक्षादपि मेमह्यं ब्रवीषीत्यन्वयः ॥ १२ ॥ १३ ॥

सम्प्रति संक्षेपतः मच्चित्तत्वादिरूपभक्तिद्वारतोऽविकम्पयोगसाधनीभूतौ विभूति योगावाकर्ण्य तत् प्रपञ्चे श्रु प्रसितो भगवन्तं स्तुवन्नर्जुनउवाच भवानित्यादिना भातीति भाधातोः ( भातेर्डवतुः ) इत्यौणादिके डवतु प्रत्ययेरूपम् अर्थात् स्वप्रकाशस्त्वम् परमुत्तमम् पिपर्तीनि पॄ पालन पूरणयोरिति धातोः पचादेराकृतिगणत्वादच् प्रत्यये गुणेरपरे रूपम् अर्थान्निखिल-लोकानां पालनपूरणक्षमम् ब्रह्म अर्थात् तत्त्वम् तपोवासि बृंहतोति वृद्ध्यर्थाद् बृंह धातो रौणादिके ( बृंहेर्नोच्च ) । ४ । १४६ । इति मनिन् प्रत्यये नकारस्यात्वे यणिरूपम् " ब्रह्मतत्त्वं तपोवेदे न द्वयोः पुंसिवेधसि ऋत्विग योगभिदोः विप्रे " इति मेदिनी अर्थान्नापर मुपास्यम् ( तदेव ब्रह्मत्वं विद्धि नेदंयदिद मुपासते ) इति श्रुतिः परम् सर्वोत्कृष्टम् केवलम् वा " परः श्रेष्ठारि दूरान्योत्तरे क्लीवंतु केवले " इति मेदिनी धाम तेजोऽसिदधाति धीयतेवेति डुधाञ् धारण पोषणयोरिति धातोरौणादिके ( सर्वधातुभ्यो मनिन् ) । ४ । १४५ । इति मनिन् प्रत्ययेरूपम् " धामशक्तौ प्रभावेच तेजोमन्दिर जन्मसु " इतिविश्वः ( यस्यभासा सर्वमिदं विभाति ) इति

श्रुतेः अर्थात् सूर्यादीनामपि प्रकाशकमिति भावः परमम् परासर्वोत्कृष्टा मा मानं यस्यतदिति बहुव्रीहिसमासेरूपम् मानमिति मामाने इतिधातोः ( घञर्थेक विधानम् ) । वा० । इति-कप्रत्यये ( आतोलोप इटिच ) । ६ । ४ । ६४ । इत्याकारलोपे टापि दीर्घे रूपम् अर्थादपरिमितम् पवित्रम् पुनातीति पूञ् पवने इतिधातोः ( कर्तरिचर्षि देवतयोः) । ३ । २ । १८६ । इनीत्र प्रत्यये गुणेऽवादेशेच रूपम् " पवित्रंतु मेध्येताम्रे कुशजले अर्घोपकरणेचापि पवित्रातु नदीभिदि " इतिहैमः अर्थाद् ज्ञानमात्रत एव सवासनाविद्याकाम्यकर्मणां निवर्तक मितिभावः एवं विशेषण त्रयविशिष्टस्त्वमसि अत एव ऋषयोभृग्वादयः " ऋषयः सत्यवचसः " इत्यमरः ऋषन्तीति गत्यर्थाद् ऋषीधातो रौणादिके इनि प्रत्यये रूपम् अर्थाद् वेदार्थस्य द्रष्टार इति यावत् । देवर्षिः देवानामिन्द्रादीनामृषिरिति षष्ठीसमासः * यद्वा देवोवासुदेवः ( नामैकदेशेनापि नामिनो ग्रहणम् ) सत्या, भामा, सत्यभामा यथा तस्यैव ऋषि र्दीधितिर्यस्येति व्यधिकरण पद बहुव्रीहि समासे रूपम् " ऋषिर्वेदे वशिष्ठादौ दीधितौच पुमानयम् " इति मेदिनी तथा भूतो नारदः नरस्यधर्म्यं मिति नरशव्दात् ( नराच्चेति वक्तव्यम् ) । ४ । ४ । ४६ । इत्यण् प्रत्यये आद्यचो वृद्धौ भत्वादकारलोपे नारम् तद् ददातीति दानार्थात् डुदाञ् धातोः ( आतोऽनुपसर्गेकः ) । ३ । २ । ३ । इतिक प्रत्ययेतस्य कित्वादाकार लोपे उपपद समासे नारदः * यद्वा नरादजाज् जातमिति शैषिकेऽण्प्रत्ययेरूपम् नारम् जलम् ( आपोवैनरसूनवः ) इतिमनूक्तेःतत् सर्वदा ददाति पितृभ्य इति पूर्ववत् प्रत्ययादि तत्वंवाददाति भक्तेभ्य इतिवा नराणां वा समूह इति ( तस्यसमूहः ) इत्यण् प्रत्यये पूर्ववद्वृद्धयादि कार्येनारः तं द्यति खण्डयति कलहोत्पादनेन नाशयति इति अत्र खण्डनार्थाद्दो धातोः आदेच उपदेशेऽशिति ) । ६ । १ । ४५ । इत्योकारस्यात्वे उक्त सूत्रणक प्रत्यये रूपम् * यद्वानुर्नरस्यवेदम् इति ( तस्येदम् ) । ४ । ३ । १२० । इत्यण्प्रत्यये नारम् अज्ञानम् तद्द्यति नाशयति ज्ञानोपदेशादिनेति पूर्ववत् प्रत्ययादौ रूपम् असितः अकारो वासुदेवः स्यादित्येकाक्षर कोशः तत्रसित मत्रसितं यस्येति व्यधिकरण पूर्वपद बहुव्रीहि समासे रूपम् सीयतेस्मेति सयनंवेति बन्धनार्थाद् षिञ् धातोः कर्मणि ( निष्ठा ) । ३ । २ । १०२ । इति सिद्धेभावे ( नपुंसके भावेक्तः ) । ३ । ३ । १५ । इतिक्त प्रत्यये एकाचूत्वादिण् निषेधे कित्वाद् गुणनिषेधेसितम् "सितमवसितेच स्याद्बद्धेऽपि धवलेत्रिषु शर्करायां स्त्री" इति मेदिनी तथा तेनैव प्रकारेणेति तच् छब्दात् ( प्रकारवचने थाल् ) । ५ । ३ ।२३ । इति थाल् प्रत्यये ( प्राग्दिशो विभक्तिः ) । ५ । ३ । १ । इति विभक्तिसंज्ञायाम् ( त्यदादीनामः ) । ७ । २ । १०२ । इत्यत्वे पररूपत्वे च ( तसिलादिष्वाकृत्वसुचः ) इत्यव्ययत्वम् देवलः देवं वासुदेवं लात्यादत्ते स्वयम् भक्ताँश्च बोधयति इति ला आदाने इतिधातोः ( आतोऽनु ) । ३ । २ । ३ । कप्रत्ययेरूपम् तन्नामक ऋषिविशेष इति यावत् व्यासयति विस्तारयति वेदार्थम् पुराणेतिहासादिभिरिति विपूर्वाद्णिजन्तादुपवेशनार्थस्यापि धातूनामनेकार्थत्वात् उपसर्गवशेनार्थान्तरत्वाद्वाविस्तारार्थादासि धातोः पचाद्यचिणेर्लोपे रूपम् एते सर्वेस्दाम् भवन्तम् पुरुषम् पुरतीति पुर

अग्रगमने इतिधातो रौणादिके (पुरः कुषन्)। ४। ७४। इति कुषन् प्रत्यये कित्वाद् गुण निषेधे पुरुष स्तम् * यद्वा पूरयतीति आप्यायनार्थात् पूरीधातोर्वाहुलकादुक्त प्रत्यये रूपम् "पुरुष-स्त्वात्मनि नरे पुंनागेच" इति हैमः शाश्वतम् शश्वद्भव इति (तत्र भवः)। ४। ३। ५३। इति अण् प्रत्यये आद्यचोवृद्धौ यचिभ मितिभत्वेन प्राप्तस्य (अव्ययानां भमात्रेटिलोपः) ।वा०। इति टिलोपस्य (वहिषष्टिलोपो यञ्च)। वा० इति टिलोपवचनेनानित्यत्वात् शाश्वतस्तम्। शश्व-देवेति स्वार्थे प्रज्ञादे राकृतिगणत्वादण् प्रत्ययेवारूपम् शशतीति शशप्लुतगतौ इति धातोः (उणादयो बहुलम्)। ३। ३। १। इति वति प्रत्यये शश्वत् "अभीक्ष्णं शश्वदनारते" इत्यमरः "शश्वत् रुहसहार्थयोः" इत्यजयः अर्थान्नित्यम् दिव्यम् दिवि भव इति (दिगादिभ्योयत्) । ४। ३। ५४। इति यत् प्रत्यये भत्वेन पदत्वस्य बाधात (दिवउत्)। ६। १। १२१। इत्यस्या प्रवृत्तौ दिव्यस्तम् अर्थात् सर्व प्रपञ्चातीतम् आदिदेवम् आदिः प्रथम श्रासौ देवो द्योतनात्मकः इति कर्मधारयसमासे आदिदेव स्तम् * यद्वा देवाना मिन्द्रादीना मादि रिति षष्ठी समासे (राजदन्तादिषु परम्। २। २। ३१। इति राजदन्तादे राकृतिगणत्वात् देव शब्दस्य परप्रयोगे रूपम् इन्द्रानुजत्व वारणाय अजम् नजात इति नञ् पूर्वाद्जनी प्रादुर्भावे इति धातोः (अन्येष्वपि दृश्यते)। ३। २। १०१। इतिडप्रत्यये टेर्लोपेऽजस्तम् अर्थादजन्मानम् * यद्वा वीयते गम्यते योगिभि रिति अजगता विति धातो र्वाहुलकादप्प्रत्यये (अजाविभ्या मिति निर्देशाद् व्यादेशा भावे रूपम् "अजा विष्णुहरच्छागाः" इत्यमरः विभुम् विशेषेण भवति इति विपूर्वाद् भूधातोः (विप्रसंभ्योड्व संज्ञायाम्)। वा०। इतिडु प्रत्यये टेर्लोपे विभुस्तम् अर्थाद् व्यापनशीलम् एतादृग् विशेषण विशिष्टम् मे मह्य माहुरुपदिदिशुः ब्रूञ् धातोः (वर्तमानसामीप्ये वर्तमानवद्वा) । ३। ३। १३१। इति भूते लटः प्रथम पुरुष बहुत्वे झौतस्य (ब्रुवः पंचाना मादित आहो ब्रुवः) । ३। ४। ८४। इत्युसादेशे धातोश्चाहादेशे शपोलुकि रुत्वविसर्गयो रूपम् तथा स्वयं साक्षात् आत्मनेति भावः सुष्टुवयते इति अयगता विति धातोः बाहुलकात् औणादिकेऽम् प्रत्यये मान्तत्वा दव्ययस्त्वम् "स्वय मात्मना" इत्यमरः त्वं ब्रवीषि कथयसि ब्रूञ् धातोर्लटो मध्यम पुरुषैकत्वे सिपि सार्वधातुकत्वाच्छपि तस्यादादित्वाल्लुकि (ब्रुव ईट्)। ७। ३। ६३। इतीडागमे गुणावा देशयोः षत्वेच रूपम्, नारदादीना मृषित्वेऽपि तद् वैशिष्ट्य बोधनार्थं पृथगुपादानम् ऋषीणा माप्तत्वाद् भवदुक्ति र्युक्तैवेति भावः ॥ १२ ॥ १३ ॥

**सर्व मेतदृतं मन्ये यन्मां वदसि केशव ॥**

**नहि ते भगवन् व्यक्तिम् विदु र्देवा न दानवाः ॥ १४ ॥**

भोकेशवयत् त्वं मां वदसि एतत् सर्वमृतं मन्ये हियस्मात् भोभगवन् ते तव व्यक्तिम् देवाः दानवाश्च न विदुरित्यन्वयः ॥ १४ ॥

कोब्रह्माचेशः शिव आनयोरितरेतरद्वन्द्वे केशौ तावेव पुत्रपौत्रौ विद्येते यस्येति प्रशस्ताः केशाः कचाः सन्त्यस्येतिवा केश शब्दात् ( केशाद् वोन्यतरयाम् ) । ५ । २ । १०९ । इति मत्वर्थीयेव प्रत्यये केशव स्तत् सम्बुद्धौ रूपम् भूमि निन्दा प्रशंसासु नित्य योगेऽतिशायने सम्बन्धेऽस्ति विवक्षायांभवन्ति मतुवादयः, यद्वा केशौ ब्रह्मेशानौ वातिगच्छत्यंश कलाभिः सृष्टि संहारार्थ मिति वागति गन्धनयो रिति धातोः ( आतोऽनुपसर्गेकः ) । ३ । २ । ३ । इतिक प्रत्यये ( आतो लोप इटिच ) । ६ । ४ । ६४ । इत्याकारलोपे उपपद समासे केशव स्तत् सम्बुद्धौ रूपम् कायति कचति वेति शब्दार्थात् कैधातोः बन्धनार्थात् कच धातोर्वा ( अन्येष्वपि दृश्यते ) । ३ । २ । १०१। इतिड प्रत्यये टेर्लोपेक इति "को ब्रह्माणि समीरात्म यमदक्षेपु भास्करे मयूरेऽग्नौच पुंसिस्यात् सुखशीर्षजलेषुकम " इति मेदिनी ईष्टे इति ईश ऐश्वर्ये इति धातोः पचादित्वादचि ( इगुपध ज्ञाप्री किरः कः ) । ३ । १ । १३५ । इतिक प्रत्यये रूपम् "ईशः स्वामिनि रुद्रे च स्यादीशा हलदण्डके " इति शान्ते विश्वः "प्रभुशंकरयो रीशः स्त्रियां लाङ्गलदण्डके " इति तालव्यान्ते रुद्र रभंसौ क्लिश्यते उपतापयति क्लिश्नाति विबाधयतीति उपतापार्थात् विबाधनार्थाद् वा क्लिश धातो रौणादिके ( क्लिशेरन्लोलोपश्च ) इति अन् प्रत्यये ललोपलघूपध गुणयोः केश इति * यद्वा के शिरसि शेते तिष्ठतीति धातूनामनेकार्थत्वेन शीङ् स्वप्ने इति धातोः अन्येष्वपीतिड प्रत्यये टेर्लोपे उपपदसमासे ( हलदन्तात् सप्तम्याः संज्ञायाम् ) । ६ । ३ । ६ । इति सप्तम्या अलुकि रूपम् यद्वा कस्य शिरस ईशः प्रभुः रक्षकत्वादितिषष्ठी समासे रूपम् " केशः स्यात् पुंसि वरुणे-ह्रीवेरे कुन्तलेऽपिच " इति मेदिनी "कचः केशः शिरोरूहः " इत्यमरः त्वम् भवान् यद्वचः मांमह्यम् वदसि कथयसि ( अहमपीद मचोद्यं चौद्ये ) इति भाष्य प्रयोगात् ( अर्थ निबन्धनेयं संज्ञेति ब्रू धातु समार्थ वद धातोर्योगे सम्प्रदानत्वाविवक्षायाम् अस्मच्छब्दात् कर्मणि द्वितीया व्यक्तार्थाद् वद धातोर्लटो मध्यम पुरुषै कत्वे सिपि शपि रूपम् एतद् भवदुक्तम् सर्वम् निखिलम् ऋतम् सत्यम् ऋच्छति स्मेति ऋगता विति धातोः ( गत्यर्था कर्मक ) । ३ । ४ । ७२ । इत्यदिना कर्तरिक्त प्रत्यये रूपम् ऋतं शिलोञ्छे पानीये पूजितेदीप्त सत्ययोः इति मेदिनी मन्येऽवगच्छामि मन ज्ञाने धतोर्लट उत्तम पुरुषैकत्वे इटि टेरेत्वे सार्वधातुकत्यात् दिवादित्वेनश्यन् प्रत्यये पररूपे रूपम् अर्थात् सत्यत्वेन पूजितेन च भवदुक्तौ शंकावसरो नास्तीति भावः हि यस्मात् कारणात् हिनोतीति हिगता विति धातोः ( अन्येभ्योऽपि दृश्यन्ते ) । ३ । २ । ७५ । इति विच् प्रत्यये ( संज्ञा पूर्व को विधि रनित्यः ) । प० । इति गुणाभावे ( क्विप्च ) । ३ । २ । ७६ । इति क्विप् प्रत्यये ( आगम शास्त्र मनित्यम् )।प०। इति तुगभावे वा रूपम् "हि पाद पूरणे हैतौ विशेषेऽप्यव धारणे प्रश्ने हेत्वप देशेचस्सम्भ्रमासूययोरपि ही दुःख हेता वाक्यातो विषादे विस्मयेऽपिच" इति मेदिनी भो भगवन् भगं माहात्म्य मैश्वर्यं वा प्रशस्तं वियते यस्येति भगशब्दात् ( तदस्या स्त्यस्मिन्निति मतुप् ) । ५ । २ । ६४ । इति मतुप् प्रत्यये ( मादुपधायाश्च मतोर्वोऽयवादिभ्यः ) । ८ । २ । ९ । इति मस्यवत्वे भगवाँ स्तत् सम्बुद्धौ रूपम् भज्यते इति सेवार्थाद् भज् धातो·

( खनोघच ) । ३ । ३ । १२५ । इत्यत्रघित् करणादन्यतोऽपिघ इतिघप्रत्यये ( चजोःकु ) । ७ ।३।५२। इति कुत्वेरूपम् "भगं श्रीकाम माहात्म्य वीर्ययत्नार्कं कीर्तिषु" इत्यमरः "भगं श्रीयोनिवीर्येच्छा ज्ञानवैराग्य कीर्तिषु माहात्म्यैश्वर्ययत्नेषु धर्मे मोक्षेऽथनारवौ" इति मेदिनी तेतव तेमयाविति ते आदेशः ( कर्तृकर्मणोः कृति ) । २ । ३ । ६५ । इति कृद्योगाषष्ठी व्यक्तिम् व्यञ्जनमिति व्यज्यतेऽनयेतिवा विपूर्वाद् व्यक्तिम्रक्षणाद्यर्थादञ्जू धातोः ( स्त्रियांक्तिन् ) । ३ । ३ । ९४ । इति क्तिन् प्रत्यये कित्वात् ( अनिदितां हल ) । ६ । ४ । २४ । इत्यादिना नकारलोपे कुत्वेचत्वें उपसर्गस्ययणिच व्यक्तिस्ताम् अर्थात् पृथगात्मत्वम् " व्यक्तिस्तुपृथगात्मता " इत्यमरः देवाः देवनशीलाः सुराः दानवाः असुराश्च दनोरपत्यानीति ( तस्यापत्यम् ) । ४ । १ । ९२ । इत्यण् प्रत्यये आद्यचो वृद्धौ भत्वात् ( ओर्गुणः ) । ६ । ४ । १४६ । इति गुणेऽवादेशेचरूपम् " असुरादैत्य दैतेय दनुजेन्द्रारि दानवाः " इत्यमरः नविदुःनजानन्ति ज्ञानार्थाद् विद्धातोः ( वर्तमान सामीप्ये वर्तमानवद्वा) इति भूते लट स्थाने प्रथम पुरुष बहुत्वे झौ ( विदोलटोवा ।३। ४।८३) इति तस्योसादेशे सार्वधातुकत्वेन जातस्य शपोऽदादित्वाल्लुकि ( सार्वधातुकमपित् ) इति ङित्वेनगुणनिषेधे रुत्व विसर्गयोरूपम् ॥ १४ ॥

**स्वयमेवात्मनात्मानं वेत्थत्वं पुरुषोत्तम ॥**
**भूतभावन भूतेश देवदेव जगत्पते ॥ १५ ॥**

भो भूतभावन भोभूतेश भोदेवदेव भोजगत्पते पुरुषोत्तम ? त्वम् स्वयमेव आत्मना आत्मानं स्वत्वम्, वेत्थ इत्यन्वयः ॥ १५ ॥

भोभूतभावन ! भूतानि प्राणिन श्चराचराणि च भावयत्युत्पादयतीति प्रयोजकणिजन्ताद् भावीत्यस्मात् (नन्दि ग्रहि० ३ । १ । १३४) इति ल्युप्रत्यये (युवोरनाकौ ७ । १ । १ ।) इत्यना देशे आर्धधातुकत्वात् ( णेरनिटि ६ । ४ । ५१ ) इति णेर्लोपे, उपपद समासे भूतभावनस्तत्सम्बुद्धौ रूपम्, यद्वा भूतानि भावयते प्रापयतीति प्राप्त्यर्थाद् भूधातोः ( सत्याप पाश० ३ । १ । २५ ) इत्यादिना स्वार्थेणिचि वृद्धावावादेशे च ततः ( सनाद्यन्ता धातवः ३ । १ । ३२ । ) इति धातुत्वात् उक्ते प्रत्यये रूपमवसेयम्, ) भूतैर्भाव्यते विचार्यते प्राप्यतेवेति ( कृत्यल्युटो बहुलम् ३ । ३ । ११३ ) इति बाहुलकात् कर्मणि ल्युटिरूपम्, यद्वा भावनं भावना भाविधातो स्त्रीत्वे भावे ( ण्यास श्रन्थो युच् ३ । ३ । १०७ ) इति युचि प्रत्ययेऽनादेशे णेर्लोपे टापिदीर्घे " विमर्षो भावना चैव वासना च निगद्यते " इति कोषान्तरम्, भूतानां प्रणिनां भावना विमर्षो यस्मिन्निति व्यधिकरणपदबहुव्रीहिसमासे ( गोस्त्रियो० १ । २ । ४८ ) इति ह्रस्वे भूतभावनस्तत्सम्बुद्धौ रूपम्, यद्वा भूतानां भाः कान्तिरिति षष्ठीतत्पुरुषे भूतभाः तस्यावनं निवासो निलयो वा यस्मिन्निति तत्सम्बुद्धौ भातीति भादीप्ता विति धातोः ( क्विप्च ३ । २ । ७६ ) इति क्विप् प्रत्यये

भाः, यद्वा भानमिति सम्पदादेराकृतिगणत्वात् भावे क्विप् प्रत्यये रूपम् 'भा मुव्यलंकृतौ दीप्तौ स्त्रियां भाः किरणे द्युतौ' इति नानार्थे रत्नमाला वनति वनुते वेति वन संभक्तौ 'वनुया चने' इतिधातोः पचादेराकृतिगणत्वादचिवनम् 'क्लीवं स्यात् कानने नीरे निवासे निलये वनम्' इति रभसः अर्थाद्भोभूतोत्पत्ति निलय! भूतेश! भूताना मीश इति षष्ठीति समासे भूतेश स्तत्सम्बुद्धौ, यद्वा भूतानाम्-इः कामः-तं श्यति, भूतः प्राप्तः-इः कामो यस्येति भूतेस्तं श्यतीति 'शोतनूकरणे इति धातोः ( आदेच उपदेशेऽशिति ६।१।४५ ) इत्यात्वे ततः ( आतो ऽनुपसर्गे कः ) इति कप्रत्यये ( आतो लोप इटि च ६।४।६४ ) इत्याकारलोपे भूतेशस्तत्सम्बुद्धौ, यद्वा भूता समा सत्या वा-ईशा ईश्वरतायस्येतिरूपम्, 'भू सत्ताया मिति धातोः ( गत्यर्थाकर्मक-श्लिषशीङ् ३।४।७२। इति कर्तरिक्तप्रत्यये तस्य कित्वात् ( श्र्युकः किति ७।२।११ ) इतीण्निषेधे गुणनिषेधेच भूतानि 'भूतंक्ष्मादौ पिशाचादौ जन्तौ क्लीबं त्रिषूचिते, प्राप्ते सत्ये समे वृत्ते देवयोन्यन्तरेतुना कुमारेऽपि' इति मेदिनी। ईष्टे इति कर्तरि, ईशनमिति स्त्रात्वे भावे च 'ईश ऐश्वर्ये' इतिधातोः पचादित्वादचि ( गुरोश्च हलः ३।३।१०३ ) इत्यकार प्रत्यये टापि दीर्घे च ईशः, ईशाच शब्दौ निष्पन्नौ, अर्थात्-ब्रह्मादीनां रजस्तमोमयत्वेन तत्रत्यैश्वर्यस्यो-पचयापचयशालित्वात् भवदैश्वर्यस्य सात्विकत्वेन सदा समत्वं सत्यत्व मितिभावः।

देवदेव! देवान् सूर्यादीनपि देवयति स्वधाम्नाप्रकाशयतीति प्रयोजकणिजन्ताद् 'दिवु क्रीडा विजिगीषा व्यवहाराद्यर्थाद् धातोः ( कर्मण्यण् ३।२।१ ) इत्यणि प्रत्ययेणेर्लोपे देवदेवस्तत्सम्बुद्धौरूपम, दीव्यन्तीति दिवुधातोः पचादित्वादचि तस्यार्धधातुकत्वेन लघूपधगुणे देवा ब्रह्माद्यास्तेषामपि देवः पूज्य इति, यद्वा देवानामिन्द्रियाणां देवः प्रभुर्नियन्ता इति षष्ठी समासे देवदेवस्तत्सम्बुद्धौ 'देवः सुरे घने राज्ञि देवमाख्यातमिन्द्रिये' इति कोशान्तरम् अर्थाद्-भोहृषीकेश! इति भावः।

भो जगत्पते! जगतां भुवनानां पतिः स्वामीति षष्ठीति समासे जगत्पति स्तत्सम्बुद्धौ-रूपम्, यद्वा जगतां शरीरस्थानां समानोदानव्यानादिवायूनां पतिर्नियन्ता तत्सम्बुद्धौ। गच्छतीति 'गम्लृगताविति धातोः ( द्युति गमिजुहोतीनां द्वे च, वा० ) ३।२।१।७८ ) इति क्विप् प्रत्यये धातोर्द्वित्वेऽभ्यासकार्य्ये ( गमः क्वौ ६।४।४० ) इति मकारलोपे ( ह्रस्वस्य पिति कृति तुक् ६।१।७१ ) इति तुगागमे जगदिति 'जगत् स्याद् विष्टपे क्लीवं वायौना जङ्गमे-त्रिषु' इति मेदिनी 'विष्टपं भुवनं जगदित्यमरः'। पातीति 'पारक्षणे-इतिधातो रौणादिके ( पातेर्डति ४।५७। इति डति प्रत्यये डित्वाट्टेर्लोपे पतिः 'पतिर्धवेना त्रिष्वीशे इति विश्वः।

भो पुरुषोत्तम! पुरुषेषु-उत्तम इति सप्तमीति योगविभागात् समासे पुरुषोत्तमस्तत्स-म्बुद्धौ, पुरन्तीति 'पुर अग्रगमने-इति धातो रौणादिके ( पुरः कुषन् ४।७४ ) इति कुषन् प्रत्यये कित्वाद् गुणनिषेधे पुरुषाः 'पुरुषः पूरुषे सांख्यज्ञेच पुंन्नागपादपे-इति मेदिनी' 'पुरुषा-

वात्ममानवौ–इत्यमरः' अतिशयेनोत्–उत्कृष्टमिति–उत्कृष्टवचनादुच्छब्दात् ( अतिशायने तमविष्ठनौ ५। ३। ५५ ) इति तमप् प्रत्यये चर्त्वे–उत्तमः। द्रव्य प्रकर्षवाचकत्वेनास्मात् ( किमेत्तिङव्ययघादाम्वद्रव्य प्रकर्षे इत्यामुप्रत्ययाभावोऽवगन्तव्यः, यद्वा उत्ताम्यतीति उत्पूर्वात् 'तमु-काङ्क्षायामिति धातोः पचादित्वादचिरूपम्, उत्तमनमिति–उत्तम्यते वेति ( भावे ३। ३। १८। ( अकर्तरिचकारके संज्ञायाम् ३। ३। १६ ) इतिवाघञ्प्रत्यये तस्यञित्वेन प्राप्ताया उपधावृद्धेः ( नोदात्तोपदेशस्य मान्तस्याऽनाचमेः )। ७। ३। ३४। इति निषेधेरूपम्, यद्वा पुरुष आत्मा उत्तमः श्रेष्ठोयस्येति बहुब्रीहि समासे पुरुषोत्तमस्तत्सम्बुद्धौ रूपम्, पुरु प्रभूतं सनोति ददाति भक्तेभ्यो मनोऽभिलषितमिति 'षणुदाने इतिधातोः ( अन्येष्वपि दृश्यते ३। २। १०१। इतिडप्रत्यये रूपम्, यद्वा पुरि शरीरे–ओषतिदहति भक्तानिष्टानिति ) इगुपधज्ञा प्रीकिरः कः। कः ३। १।१३५ इति कप्रत्यये गुणनिषेधे रूपम्, पिपर्ति पूर्यते वेति 'पॄ पालन पूरणयोरिति धातोरौणादिके ( पॄभृदि १। २३ ) इतिकुप्रत्यये कित्वाद् गुणनिषेधे ( उदोष्ठ्य पूर्वस्य ७। १। १०२ ) इति ऋकारस्योत्वे रपरत्वे पुरुरिति 'पुरुः प्राज्येऽभिधेयवत् पुंसिस्याद् देवलोके च नृपभेद परागयो रिति हैममेदिन्यौ। अस्मादेव धातोः कर्तरि ( क्विप् च ३। २। ७६ ) इति क्विप् प्रत्यये उक्त सूत्रेणोत्वे रपरत्वे पुरशब्दः 'पूः शरीरे पत्तनेचेति कोषः' यद्वा पुरि शरीरे वसतीति 'वसनिवासे–इतिधातोः क्विप् प्रत्यये ( वचिस्वपि यजादीनां किति ६। १। १५ ) इति वस्योत्वे सम्प्रसारणे पूर्वरूपे ( शासि वसि घसीनां च। ८। ३। ६० ) इतिषत्वे पुरुड्–जीवात्मा सोऽस्त्यंशो यस्येति मत्वर्थीये ( अर्श आदिभ्योऽच् ५। २। २७ ) इत्यचिप्रत्यये 'यचिभमिति भत्वेन पदत्वस्य बाधाद् जश्त्वाभावे पुरुषः इति। त्वं स्वयमेव, अर्थादन्योपदेशमन्तरेणैव सुष्ठु अयते अयतिवेति 'अय गताविति धातोः इट किट कटीति प्रश्लिष्टादिधातोः ( उणादयो बहुलम् ) इत्यम् प्रत्यये ऽव्ययत्वम् 'स्वयमात्मना इत्यमरः' आत्मना स्वरूपेण, अर्थात् परव्यावर्तनेन, एतेनान्तःकरणादिसाधना भावः सूचित इतिभावः। अततीति मनिण् प्रत्यये आत्मा 'आत्मा कलेवरे यत्ने स्वभावे परमात्मनि, चित्ते धृतौ च बुद्धौ च परव्यावर्तनेऽपि चेति धरणिः आत्मानं निरुपाधिकं सच्चिदानन्द स्वरूपं सोपाधिकं निरतिशय ज्ञानैश्वर्यादि शक्ति शालित्वं स्वरूपम्, वेत्थ जानासिनान्यः कोऽपि-यावत्, 'विद्ज्ञाने धातोर्लटो मध्यमपुरुषैकत्वे सिपि सार्वधातुकलक्षणस्य शपोऽदादित्वाल्लुकि ( विदो लटोवा। १। ४। ६३। ) इति तस्य थलादेशे लघूपधगुणे चर्त्वे च रूपम्। * यद्वा भोभूतभावनादि विशेषण विशिष्टत्वेन पुरुषोत्तम ! अयमेष त्वमेव आत्मना स्वभावेनैव सुसुष्ठु आत्मानं निरुपाधिकं सोपाधिकं च स्वरूपं वेत्थ नतुब्रह्मादयः सुराः, यतस्तेषां स्वरूपवेदने साधनीभूतान्तः करणस्यावश्यकतास्ति नतु भवतइति भावः। सवतीति 'षुगता-विति' षुप्रसवैश्वर्ययो रिति वा धातोः ( क्विप् च ३। २। १७८ ) इति क्विपि, आगमशास्त्र-स्यानित्यत्वेन 'ह्रस्वस्य पिति कृति ) इति तुगभावे प्रादिपाठादव्ययत्वम् 'बलवत् सुष्ठु किमुत स्वत्यतीव च निर्भरे–इत्यमरः॥ १५॥

**वक्तु मर्हस्यशेषेण दिव्या ह्यात्मविभूतयः ॥**
**याभि र्विभूतिभि र्लोका निमाँस्त्वं व्याप्य तिष्ठसि ॥१६॥**

भोपुरुषोत्तम ! हि यस्मात्कारणात्, दिव्या आत्मविभूतयः अशेषेण वक्तुमर्हसि याभिर्विभूतिभिः, इमान् लोकान् व्याप्य त्वं तिष्ठसीत्यन्वयः।

हि यस्मात्कारणात् पुरुषोत्तम-इयनमिति 'हिगताविति धातोः सम्पदादेराकृति गणत्वात् ( सम्पदादिभ्यः क्विप्–वा० ) इति क्विप् प्रत्यये क्त्वाद् गुणनिषेधे ( आनिलोट् ८।४।१६ ) इति निलोडिति वक्तव्ये आगमविशिष्टपाठात् 'आगमशास्त्रमनित्यम्' इति तुगभावे रूपम्, स्वरादेराकृति गणत्वादव्ययत्वम् 'हि हेतावधारणे–इत्यमरः' 'हि पादपूरणे हेतौ विशेषेप्यवधारणे प्रश्ने हेत्वपदेशे च सम्भ्रमासूययोरपि, ही दुःख हेतावाख्यातो विषादे विस्मयेऽपि चेति मेदिनी' दिव्याः–दीव्यन्ति भक्ताः सुकृतिनो यस्यामिति क्रीडाद्यर्थाद् 'दिवुधातो रौणादिके ( उणादयो बहुलम् ।३।३।१।) इति डिवि प्रत्यये डित्वाट्टेर्लोपे यद्वा न्यासोहि तेन ( दिवेर्डिवि ) इति सूत्रेण प्रत्यये द्यौः सुरलोकः 'सुरलोकोद्योदिवौद्वे–इत्यमरः' तत्रभवा इति दिव्शब्दात् ( दिगादिभ्योयत् ४।३।५४ ) इति यत्प्रत्यये ( यचिभमिति भत्वेन पदत्वस्य-वाधात् ( दिव उत् ६।१।१३१ ) इत्यस्याप्राप्तौरूपम्, अर्थादत्यद्भुताः । आत्मविभूतयः– आत्मनः स्वस्य विभूतय इति षष्ठीति समासे रूपम् अर्थाद्भवदैश्वर्याणामप्राकृतत्वेन सर्वेषा मेव ज्ञातुमशक्यत्वेनावश्यं ज्ञातव्यत्वेन च दुरूहत्व मितिभावः । ता एवाशेषेण–अर्थात् सर्वा एव शिष्यते इति 'शिष असर्वोपयोगे–इति धातोः ( अकर्तरि च कारके संज्ञायाम् ३।३।१९ ) इति घञ् प्रत्ययें लघूपधगुणे शेषः सोऽविद्यमानोयस्येति ( नञोऽस्त्यर्थानां वाच्यो वाचोत्तर पदलोपः–वा० ) इति बहुव्रीहि समासे नकारलोपेऽशेषस्तेन ( प्रकृत्यादिभ्य उपसंख्यानम्–वा० ) इति तृतीया । वक्तुम्–कथयितुम्, 'वच धातोर्भावे ( तुमुन्ण्वुलौ क्रियायां क्रियार्थायाम् ३। ३।१० ) इति तुमुन्प्रत्यये एकाच्त्वादिण् निषेधे कुत्वे ( कृन्मेजन्तः १।१।३९ ) इति मान्तत्वादव्ययत्वम् । अर्हसि योग्योऽसि, पूजार्थादर्ह धातोर्लटः मध्यम पुरुषैकत्वे सिपि शपि रूपम् । याभिर्विभूतिभि रैश्वर्यैर्विभवनानीति विपूर्वात्सत्तार्थात् 'भू धातोः ( स्त्रियां क्तिन् । ३ ३।९४ ) इति क्तिन् प्रत्यये ( तितुत्रतथ ७।२।९ ) इत्यादिनार्धधातुकलक्षणेड् निषेधे क्त्वाद् गुणनिषेधे विभूतय स्ताभिः साधनी भूताभिः 'विभूतिर्भूतिरैश्वर्य्यमित्यमरः' इमानेतान् स्वमाया रचितत्वेन स्वाग्रस्थान्–इतीदंशब्दप्रयोगदाने तात्पर्यम्, लोकान्–लोक्यन्ते इति दर्शनार्थात्–'लोकृ धातोः ( अकर्तरिच कारके संज्ञायाम् ३।३।१९ ) इति घञ् प्रत्यये लघूपधगुणे लोका स्ततः ( कर्मणि द्वितीया २।३।२ ) इति द्वितीया 'लोकस्तु भुवने जने–इत्यमरः' अर्थादिमानि भुवनानिव्याप्य व्यापयित्वेति ( कुगति प्रादयः २।२।१८ ) इति समासे ( समासे

ऽनञ्पूर्वे क्त्वो ल्यप् ७ । १ । ३७ । इति क्त्वोल्यवादेशो तस्यार्धधातुकत्वात् ( विभाषापः ६ । ४ । ५७ । ) इत्ययादेशाभावे ( णेरनिटि ६ । ४ । ५१ । इति णेर्लोपेरूपम् अर्थात् सम्पूर्य, तिष्ठसि स्थितोऽसि गतिनिवृत्यर्थात् ' स्थाधातोर्लटो मध्यमपुरुषैकत्वे सिपि सार्वधातुकत्वाच्छपि ( पाघ्राध्मास्थाम्नादाण्० ७ । ३ । ७२ ) इत्यादिना तिष्ठादेशोरूपम् ॥ १६ ॥

" कथं विद्यामहं योगिन्, त्वां सदा परिचिन्तयन् ॥
केषु केषु च भावेषु चिन्त्योऽसि भगवन् मया " ॥ १७ ॥

भो योगिन् ! सदा परिचिन्तयन् अहंत्वां कथं विद्याम्, च पुनः मया केषुकेषु भावेषु त्वं चिन्त्योऽसि–इत्यन्वयः ।

भो योगिन् ! प्रशस्तो योगो विद्यते यस्येति योगशब्दात् ( अत इनिठनौ ५ । २ । ११५ ) इति इनिप्रत्यये भत्वादकारलोपे योगी तत्सम्बुद्धौ रूपम्, तथाच ' भूमि निन्दा प्रशंसासु नित्ययोगेऽतिशायने सम्बन्धेऽस्तिविवक्षायां भवन्ति मतुवादयः ' योजनमिति ' युज समाधौ ' युजिर् योगे ' धातोश्च ( भावे ३ । ३ । १२ । इति घञ्प्रत्यये लघूपधगुणे ( चजोः कु ) ७ । ३ ५२ ) इति कुत्वे योगः ' योगः–संनहनोपाय ध्यान संगति युक्तिषु–इत्यमरः ' यद्वा युज्यते समाधत्ते तच्छील इति युनक्ति सृष्ट्यादि मिति ' युजिर् योगे–इतिधातोर्वा ( सम्पृचानुरुध्याङ् यमाङ्यस् परिसंसृज० ) ३ । २ । १४२) इत्यादिना ताच्छील्याद्यर्थे घिनुण् प्रत्यये आर्धधातुकत्वाल्लघूपधगुणे ( चजोः कु ) ।७ । ३ । ५२ ) इति कुत्वे योगी तत्सम्बुद्धौ रूपम् । सदा सर्वस्मिन् काले ( सर्वैकान्य किं यत्तदोः कालेदा ५ । ३ । १५ ) इतिदा प्रत्यये ( सर्वस्य सोऽन्यतरस्यांदि । ५ । ३ । ६ । ) इति सादेशे रूपम् सर्वदा त्वामिति शेषः ]। परिचिन्तयन् परिचिन्तयतीति परिपूर्वकात् ' चितिस्मृत्यामिति धातोरिदित्वान्नुमि ( सत्यापपाश० । ३ । १ । २५ । इति स्वार्थेणिचि ( सनाद्यन्ता धातवः ३ । १ । ३२ ।) इति धातुत्वाल्लटि तस्य ( लटः शतृशानचौ ३ । २ । १२४ ) इति शतृप्रत्यये शित्वात्सार्वधातुकत्वेन शपि गुणेऽयादेशे प्रथमैकत्वे रूपम, अर्थात् संस्मरन् । अहमर्जुनः, त्वां सर्व भूत्यादि निलयं परमेश्वरम्, कथं केन प्रकारेण ' किं शब्दात् ( किमश्च ) । ५ । ३ । २५ ) इति थमु प्रत्यये ( प्राग्दिशो विभक्तिः ५ । ३ । १ ) इति विभक्ति संज्ञायाम् ( किमः कः ७ । २ । १०३ ) इति कादेशे तसिलादिपुपाठादव्ययत्वम् । विद्याम् जानीयाम् ' विद ज्ञाने–इति धातोः ( विधिनिमन्त्रणा । ३ । ३ । १६१ ) इत्यादिना लिङ् तस्योत्तमपुरुषैकत्वविवक्षायां मिप्प्रत्यये ( तस्थस्थमिपां तांतं तामः ) । ३ । ४ । १०१ इत्यमोदेशे ( यासुट् परस्मैपदेषूदात्तो ङिच्च ३ । ४ । १०३ ) इतियासुडागमे सार्वधातुकलक्षणस्य शपोऽदादित्वाल्लुकि ( लिङः सलोपोऽनन्त्यस्य ७ । २ । ७९ ) इति सकारलोपे यासुटोङित्वेन गुणनिषेधे रूपम् । भोभगवन् ! प्रशस्तं भगमैश्वर्यं विद्यते यस्येति भगशब्दात् ( तदस्यास्त्यस्मिन्निति मतुपिप्रत्यये ( मादुपधायाश्च मतोर्वोयवादिभ्यः ८ । २ । ९ । )

इति मस्यवत्वे प्रथमैकत्वे भगवानिति तत्सम्बुद्धौ रूपम्, भजनं भज्यते वेति 'भज सेवायामिति धातोः (खनो घच ३।३।१२५) इत्यत्रघित्करणमन्यतोऽप्ययमिति ज्ञापनाद् घप्रत्यये (चजोः कु ७।३।५२) इति कुत्वे भगम् 'भगं श्री योनि वीर्येच्छा ज्ञानवैराग्य कीर्तिषु माहात्म्यैश्वर्य्य यत्नेषु धर्मे मोक्षे च ना रवौ-इति विश्वमेदिन्यौ' अर्थाद् भो प्रशस्तैश्वर्यशालिन्। मयाऽर्जुनेन यद्वा मया लक्ष्म्या सम्पन्नेति (इत्थंभूतलक्षणे २।३।२१) इति लक्ष्मीवाचकाद् माशब्दात् तृतीयैकत्वे रूपम् अर्थात् परमैश्वर्यविशिष्टत्वम् माति मिमीते मयते वार्थिनमिति 'मा माने माङ् माने, मेङ्प्रणिदाने' इति धातोः (अन्येभ्योऽपि दृश्यन्ते ३।२।७५) इति विच्प्रत्यये (अन्येष्वपि दृश्यते ३।२।१०१) इत्यत्रापीति निपातस्य सर्वोपाधिव्यभिचारार्थकत्वेन ड-प्रत्यये टेर्लोपे टापिवारूपम्। केषु केषु (नित्यवीप्सयोः ८।१।४) इति वीप्सायां द्विरुक्तिः। भावेषु-अर्थात् सत्तास्वभावाभिप्रायचेष्टात्मजन्मादिषु 'भावः सत्ता स्वभावाभिप्राय चेष्टात्म-जन्मसु क्रिया लीला पदार्थेषु विभूति बन्धु जन्तुषु रत्यादौ चेति मेदिनी' भवनं भावः (श्रिणी भुवोऽनुपसर्गे) ३।३।२४७। इति घञि वृद्धावावादेशे च रूपम्। यद्वा कं सुखादि विद्यते येषु ते इति कशब्दात् मत्वर्थीये (अर्श आदिभ्योऽच् ५।२।१२७) इत्यचि प्रत्यये भत्वादकार-लोपे काः-तेषु अर्थात् सुख सम्वलितेषु भावेषु-इतिभावः वैषयिका धारे सप्तमी) चिन्त्योऽसि चिन्तितुं योग्य इति 'चिति स्मृत्यामिति धातोः (अचोयत्) ३।१।९७। इति यति प्रत्यये णेर्लोपे इदित्करणात् णिजभावे (ऋहलोर्ण्यत्) ३।१।१२४। इतिण्यत् प्रत्यये वा रूपम् चिन्त-नीयो भवसि 'असूभुविधातोर्लटो मध्यम पुरुषैकत्वे सिपि सार्वधातुकत्वाच्छपि तस्यादादित्वा-ल्लुकितासस्त्योर्लोपः ७।४।५०) इति सकारलोपेऽसीति रूपम्। यद्वा भो अगिन्! न गच्छंति कुपथं प्राणात्ययेऽपीति नञ् पूर्वाद् 'गम्' धातोः (अन्यत्रापि दृश्यते इति वक्तव्यम्-वा० ३।२।४८।) इति ड प्रत्यये टेर्लोपे नञोनस्यलोपे-अगा महात्मानः, अं वासुदेवमेव सर्वत्र गच्छन्त्य-वबुध्यन्ते वेति यतः 'अकारो वासुदेवः स्यादितिकोषः' अततीति अत्धातोः (उणादयो बहुलम् ३।३।१) इति डप्रत्यये टेर्लोपे अः, अव्युत्पन्नाव्ययसंज्ञकेऽनुकम्पावाचिनि अशब्दे वोपपदे गम धातोर्वा डप्रत्यये ऽपिरूपम्, ते नित्यं विद्यन्ते यस्मिन्निति नित्ययोगे (अत इनि ठनौ ५।२।११५) इतीन् प्रत्यये भत्वादकारलोपे अगीतत्सम्बुद्धौ रूपम् 'अशब्दस्यादभावेऽपि स्वल्पार्थ प्रतिषेधयोः-अनुकम्पायाञ्च तथा वासुदेवेत्वनव्ययः' इति मेदिनी, अर्थात् भो भक्तैक-निलय योऽहमर्जुनोऽर्थाद् ममत्वाभिभूतत्वेन विकलितान्तः करणत्वाद् भवन्तं परमेश्वर मजानान-इति भावः, अन्यत्सर्वं पूर्व वदेव ॥ १७ ॥

"विस्तरेणात्मनो योगं विभूतिञ्च जनार्दन।
भूयः कथय तृप्तिर्हि शृण्वतो नास्तिमेऽमृतम्" ॥ १८ ॥

भो जनार्दन! विस्तरेण-आत्मनः-योगं-विभूतिञ्च-भूयः-कथय-हि यस्मात्कारणात्-अमृतम्-शृण्वतः-मे-तृप्तिर्नास्ति, इत्यन्वयः।

भो जनार्दन जनं जन्म, अर्दयतीति स्वार्थणिजन्ताच्चौरादिकात् 'अर्द हिंसायामिति धातोः (नन्दि ग्रहि० ३ । १ । ३४) इत्यादिना नन्द्यादित्वाल्ल्यु प्रत्यये (युवो रनाकौ ७ । १ । १) इत्यनादेशे आर्धधातुकत्वाद् णेर्लोपे, उपपद समासे सन्धिकार्ये जनार्दनस्तत्सम्बुद्धौ रूपम्, अर्थान्नपुनर्भवाय कल्पन्ते भवदनन्यभक्ता इतिभावः। अत्र जननमिति 'जन जनन इति जौहोत्यादिकात् (भावे ३ । ३ । १८) इति घञ्प्रत्यये (जनिवध्योश्च ७ । ३ । ३५) इत्युपधावृद्धि निषेधे जन इतिरूपम्, यद्वा जायन्ते समुत्पद्यन्ते–इति 'जनी प्रादुर्भावे–इतिधातोः पचादेराकृतिगणत्वादचि जना इति जननमिति (जनिघसिभ्यामिण् ४ । १०३) इत्यौणादिक इण्प्रत्यये (जनिवध्योश्चेत्युपधा वृद्धिनिषेधे जनिरुत्पत्तिः सा विद्यते येषामिति (अर्श आदिभ्योऽच् ५ । २ । १२१) इति मत्वर्थीयेऽच् प्रत्यये मत्वादिकारलोपे जनास्तैरर्द्यते प्रार्थ्यते, इति 'अर्द गतौ याचनेचेति धातोः (कृत्यल्युटो बहुलम ३ । ३ । १३३) इत्यत्र बहुल ग्रहणात् कर्मणि लुल्यनादेशे तत्सम्बुद्धौ रूपम्, यद्वा अर्दनमर्दना चौरादिकादर्दिधातोर्भावे (ण्यासश्रन्थो युच् ३ । ३ १०७) इतियुच्प्रत्ययेनादेशे णेर्लोपे टापि दीर्घे रूपम्, हिंसेतियावत्, जनानां समुद्रस्थदैत्यभेदाना मर्दना यस्मादिति व्यधिकरणपद बहुव्रीहि समासे (गोस्त्रियो रुपसर्जनस्य १ । २ । ४८) इति ह्रस्वे तत्सम्बुद्धौ रूपम्, अर्थाद् भोभयापहारिन्! भो लोकानामधिगम्य प्रार्थनीय दुष्टसंहारिन्! एवेन भूयो मत्प्रार्थना न हेया भवितुमर्हति, इति तात्पर्यम्। त्वं परमेश्वरो भूयः पुनरपि 'भूयः पुनरर्थे–आधिक्ये चाव्ययम्' विस्तरेण विस्तरणमिति विपूर्वात् 'स्तृञ्–आच्छादने–इति धातोः (प्रथने वावशब्दे ३ । ३ । ३३) इत्यत्राशब्द इति पर्य्युदासात् (ॠदोरप् । ३ । ३ । ५७) इत्यप् प्रत्यये गुणे रपरे विस्तरस्तेन, अर्थाद् वचनप्रपञ्चेन साधनीभूतेनेतियावत्। आत्मनः स्वस्य, अर्थात् पारमैश्वरं योगं वैश्वरूपमयं ध्यानं युज्यते यस्मिन्निति समाध्यर्थाद् 'युज धातो रधिकरणे (अकर्तरिच कारके संज्ञायाम् ३ । ३ । १९) इति घञि लघूपधगुणे (चजोः कु० ७ । ३ । ५२) इत्यादिना कुत्वे योगस्तम् 'योगोऽपूर्वार्थ सम्प्राप्तौ संगति ध्यान युक्तियु–इति मेदिनी विभूतिं ध्यानावलम्बन मैश्वर्य्यञ्च, विभवनमिति (स्त्रियां क्तिन् ३ । ३ । ९४) इड् गुण निषेधयोः, रूपम् 'विभूतिर्भूतिरैश्वर्य मित्यमरः' तां कथय निगद 'कथवाक्य प्रबन्ध इतिधातोः स्वार्थे (सत्यापपाश ३ । १ । २५) इत्यादिना णिच् प्रत्यये तस्यार्धधातुकत्वात् (अतो लोपः ४ । ६ । ४८। इत्यकारलोपे (सनाद्यन्ता धातवः ३ । १ । ३२) इति धातुत्वाल्लोटो मध्यमपुरुषैकत्वे परगामिनि क्रियाफले सिपि तस्याह्यादेशे शपि गुणे ऽयादेशेहेर्लुकि च रूपम्। हि यस्मात्कारणात् हिनोतीति 'हि गताविति धातोः क्विप् प्रत्यये, आगम शास्त्रस्यानित्यत्वेन (ह्रस्वस्य पिति कृति तुक्) इति तुगभावे (स्वरादि निपातमव्ययम्) इत्यव्ययत्वे रूपम्। अमृतम्–अमृतं करोतीति (तत्करोति तदाचष्टे) इति णिच् प्रत्यये (प्रातिपदिकाद् धात्वर्थे बहुलमिष्ठवच्च) इतीष्ठवद्भावात् (टेः ६ । ४ । १५५) इति टेर्लोपे, अमृतयति ततः कर्तरि पचादेराकृति गणत्वादचि णेर्लोपे रूपम्, सुधास्त्रावीति भावः 'पीयूषममृतं सुधेत्यमरः) म्रियत इति 'मृङ् प्राणत्याग

इतिधातोः ( तनिमृङ्भ्यां किच्च । ३ । ७५ ) इति तन् प्रत्यये तस्यकित्त्वाद् गुणनिषेधे मृतं तन्नभवतीति नञ् समासे नलोपेरूपम्, यद्वा मरणं मृतम् ( नपुंसके भावेक्तः ) । ३ । ३ । ११४ । ) इति क्त प्रत्यये रूपं तदविद्यमानं यस्य तदिति कालत्रयेऽप्यनपायीतिभावः, तथाभूतं भवद्वच इति विशेष्य मध्याहार्यम् । शृण्वतः शृणोतीति ' श्रु श्रवणे ' इतिधातोः ( लटः शतृ-शानचावप्रथमा० । ३ । २ । १२४ । ) इत्यादिना शतृप्रत्यये तस्य शित्वात् सार्वधातुकत्वेन ( श्रुवः शृच । ३ । १ । ७४ ) इति श्रादेशे श्नुप्रत्यये तस्यशित्वेन सार्वधातुकत्वेऽपित्वेन ङित्वाद् गुणनिषेधे ( हुश्नुवोः सार्वधातुके ६ । ४ । ८७ ) इति यणि ( ऋवर्णान्नस्य णत्वं वाच्यम् वा० ) इति णत्वे शृण्वंस्तस्याकर्णयतो मे ममार्जुनस्य कृद्योगे कर्तरि षष्ठी, तृप्तिस्तर्पणम् ' तृप प्रीणने ' इति धातोः ( स्त्रियांक्तिन् ३ । ३ । ९४ ) इति क्तिन् प्रत्यये कित्वाल्लघूपधगुणनिषेधे रूपम् । नास्ति न विद्यते ' अस भुवि ) इति धातोर्लटः प्रथम पुरुषैकत्वे तिपितस्य सार्वधातुकत्वाच्छपि, अदादित्वाल्लुकि रूपम् ॥ १७ ॥

श्रीभगवानुवाच—

**हन्त ते कथयिष्यामि दिव्याह्यात्म विभूतयः ।**
**प्राधान्यतः कुरु श्रेष्ठ नास्त्यन्तो विस्तरस्यमे ॥ १८ ॥**

हन्तेतिहर्षे इदानींवा प्राधान्यतः ते तुभ्य मर्जुनाय आत्मविभूतीः कथयिष्यामि हि यतस्ता विभूतयो दिव्याः सन्ति भोकुरुश्रेष्ठ मे मम विभूतीनां विस्तरस्यान्तो नास्तीत्यन्वयः॥ ८॥

विभूति वैभव शुश्रूषयोत्सुक मर्जुन मभिलक्ष्य श्रीभगवानाह हन्तेत्यादिना हिंसागत्यर्थाद् हन्धातोः ( उणादयो बहुलम् ) इति बाहुलकात् तन् प्रत्यये नस्यानुस्वारे परसवर्णे रूपम् " हन्त हर्षेऽनुकम्पायां वाक्यारम्भ विषादयोः," इत्यमरः " वाक्यारम्भ खेद विषादहर्ष सम्भ्रमे " इति मेदिनी प्राधान्यतः मुख्यतया अर्थाद् मद्विभूतीना मपरिमेया संख्यत्वेन सर्वासाम् कथना संभवादिति भावः प्रधीयतेऽनेनास्मिन् वेति प्रपूर्वाद् धारणाद्यर्थाद् धाधातोः ( करणाधिकरणयोश्च ) । ३ । ३ । ११७ । इति ल्युस्यनादेशे दीर्घे प्रधानम् " प्रधानं स्यान्महामात्रे प्रकृतौ परमात्मनि प्रज्ञाया मपि च क्लीब मेकत्वेतूत्तमे सदा " इति मेदिनी तस्य भाव इति प्रधानं शब्दात् ( गुणवचनब्राह्मणादिभ्यः कर्मणि च ) । ५ । १ । १२४ । इति ब्राह्मणादेराकृति गणत्वेन-ष्यञ् प्रत्यये आद्यचोवृद्धौ भत्वादकारलोपे प्राधान्यम् ततः ( पञ्चम्यास्तसिल् ) । ५ । ३ । ७ । इति तसिल् प्रत्यये यद्वा तृतीयान्तात् ( आद्यादिभ्यस्तसे रुप संख्यानम् ) वा० । ५ । ४ । ४४ । इति तसि प्रत्ययेऽव्ययत्वम् अर्थाद् योगोपकारित्वेन विभूति ज्ञानस्य मुख्यत्व मितिवाभावः ते तुभ्य मर्जुनाय ( तेमयौ ) । ८ । १ । २२ । इतिते आदेशः आत्मविभूतीः स्वस्यैश्वर्याणि कर्मणि द्वितीयान्ततया विपरिणामः कथयिष्यामि निगदिष्यामि वाक्य प्रबन्धार्थात् स्वार्थणिजन्तात् कथिधातो-

र्लेट उत्तमपुरुषैकत्वे मिपि ( स्यतासीलृलुटोः ) इतिस्यप्रत्यये तस्यार्धधातुकत्वादिटि गुणायादेशयोः पत्वेचाङ्गसंज्ञाय.म् ( अतोदीर्घोयञि ) इति दीर्घे रूपम् हि यस्मात्कारणात् आत्म विभूतयः आत्मनो विभूतय इति पष्ठीसमासे रूपम् दिव्याः दिविभवा इति दिव् शब्दात् ( दिगादिभ्योयत् ) इति यत् प्रत्यये रूपम् अर्थादप्राकृताः सन्तीति शेषः पुराणान्तरेष्वपि श्रेष्ठत्वेन प्रसिद्धा असाधारणा इतियावत् भोकुरुश्रेष्ठ कुरुषु अर्थात्तद्वंशभव क्षत्रियविशेषेषु श्रेष्ठ इति सप्तमीति योगविभागात् समासे तत्सम्बुद्धौरूपम् देवेन्द्रसूनुत्वेन मदुपदेशाधिकारीति सम्बोधने तात्पर्य्यम् कुरूणामपत्यानि राजानोवेति कुरु शब्दात् कुरुनादिभ्योण्यः ) । ४ । १ । १७२ । इतिण्य प्रत्यये तस्य ( तेतद्राजा ) । ४ । १ । १७४ । इति तद्राज संज्ञायाम् ( तद्राजस्य बहुषुतेनैवा स्त्रियाम् ) । २ । ४ । ६२ । इतिलुकि कुरवः करोतीति डुकृञ् करणे इति धातो रौणादिके ( कृग्रोरुच ) इति कुप्रत्यये ऋकारस्योत्वेरपरत्वे कुरुः "कुरुर्नृपान्तरे भक्ते पुमान् पुंभूम्निनीवृतीति" मेदिनी प्रशंसितु मर्हइति प्रपूर्वात् शंसुस्तुताविति धातोः ( शंसिदुहि) । वा० । इतिक्यप्प्रत्यये तस्य कित्वात् ( अनिदिताम् ) इत्यादिनानलोपे प्रशस्यः ततः ( अतिशायने तमविष्ठनौ ) । ५ । ३ । ५५ । इतीष्ठन्प्रत्यये ( प्रशस्यस्यश्रः ) । ५ । ३ । ६० । इति आदेशे भत्वात् प्राप्तस्य यस्येति लोपस्य (टेः) । ६ । ४ । १५५ । इतिटिलोपस्यवा ( प्रकृत्यैकाच् ) । ६ । ४ । १६३ । इति प्रकृति भावे गुणे श्रेष्ठ इति हि यस्मात् कारणात् मेमम परमेश्वरस्य कर्तरिषष्ठी सम्बन्ध सामान्ये वा षष्ठी विभूतीनां विस्तरस्य प्रपञ्चस्य विस्तरण मिति ( ऋदोरप् ) इति विपूर्वात् स्तृञ् आच्छादने धातोरप् प्रत्यये गुणेरपरे रूपम् अन्तोऽवसानम् अन्तीति बन्धनार्थादति धातोरिदित्वान्नुमि ततः पचाद्यचि रूपम् अमतीति गत्याद्यर्थादम् धातोः ( उणादयो बहुलमिति तन् प्रत्यये तितुत्रतथेति इड् निषेधेऽनुस्वारे परसवर्णेवा रूपम् ) "अन्तः स्वरूपेनिकटे प्रान्ते निश्चयनाशयोः अवयवेऽपीति, हेमचन्द्रः नास्ति न विद्यते असभुवि धातोर्लटः प्रथम पुरुषैकत्वेरूपम् ॥ १६ ॥

**अहमात्मा गुडाकेश सर्वभूताशयस्थितः ॥**
**अहमादिश्च मध्यं च भूताना मन्तएव च ॥ १६ ॥**

अन्वयः—भो गुडाकेश अहं परमेश्वरः-सर्व भूताशय स्थितः-आत्माऽस्मि तथाऽहमेव, भूतानामादिः प्रथमः-मध्यम् अन्तरः-अन्तोऽवसानं चास्मीत्यन्वयः ।

व्याख्या—भो गुडाकेश, गुडाकायानिद्राया ईश इति, षष्ठीति समासे गुडाकेशस्तत्संबुद्धौ-जितनिद्रेतियावत् ॥ यद्वागुडा घनीभूताः केशाः कचायस्यतत्संबुद्धौ-यद्वा गुडास्तुहीवाऽऽचरन्तीति-प्रातिपदिकमहणे लिंगविशिष्टस्यापिग्रहण मिति गुडाशब्दात्-सर्व प्रातिपदिकेभ्यः क्विब्वाचक्तव्यः । वा० । इतिक्विप्प्रत्यये ( ततः सनाद्यन्ता ) इतिधातुत्वात् कर्तरि ( क्विप्च ) इति

क्विप्प्रत्ययेरूपम् ।। इत्यन्योऽर्थः ।। यद्वा गुडन्तीति गुडाः—गुडरक्षणे इति धातोः कर्त्तरि, इगुपधज्ञा प्रीकिरः कः । ३ । १ । १३५ । इति कप्रत्यये कित्त्वाद्गुण निषेधे रूपम् गुडारक्षितारः । अकेशाः अर्थात् अश्च वासुदेवश्च को ब्रह्मा च ईशः शंभुश्चतेषामितरेतरद्वन्द्वे ते यस्य स तत्सं-बुद्धौ सुरेन्द्रसूनुत्वात् तदवितव्य इतिभावः । इत्यन्यतरोऽर्थः ।। यद्वा अनुकम्पाऽर्थाद् अशव्दात् । मत्वर्थीये । अर्श आदिभ्योऽच् । ५ । २ । २७ । इत्यच् प्रत्यये भत्वादकारलोपे औ अनुकम्पायुक्तौ केशौ ब्रह्मेशौ गुडेरक्षणे यस्य स इति व्यधिकरण पूर्वपदे बहुव्रीहि समासे सप्तमी विशेषणे बहुव्रीहौ । २ । २ । ३५ । इति सप्तम्यन्तस्य पूर्वं प्रयोगे तत् संबुद्धौ रूपम् । इत्यपरोऽर्थः ।। अत्रार्थे गुडनंगुड इति । घञर्थे कविधानम् । वा० । इति गुड धातोर्भावेक प्रत्ययें रूपम् ।। सदाचारादि शीलत्वेन पराक्रमशालित्वा च्चोभयोरनुकम्प्यः रक्षणीय इतिभाव । गुडौ गोलेक्षुविकृतीस्नुही गुडिकयोर्गुडा ।। इति रुद्रः ।। गुडास्नुही गुडिकयोर्गुडऐक्षव गोलयोः ।। इत्यजयः ।। गुडः स्यात् गोलकेहस्तिसंनाहेक्षुविकारयोः ।। गुडास्नुह्यां चकथिता गुडिकायांच योषिति ।। इतिमेदिनी ।। गुडधातोः कर्तरि कप्रत्यये टापि गुडेति ।। अशव्दः स्यादभावेऽपि स्वल्पार्थ प्रतिषेधयोः ।। अनु-कंपायां च तथा वासुदेवेत्वनव्ययः ।। इतिमेदिनी ।। मारुते वेधसि ब्रध्ने पुंसिकः कंशिरो-ऽम्बुनोः ।। इत्यमरः ।। कोब्रह्मणि समीरात्म यमदक्षेषुभास्करे ।। मयूरेऽग्नौ च पुंसिस्यात् सुखशीर्ष जलेषुकम् ।। इतिमेदिनी ।। ईष्टे इति ईशऐश्वर्यं इतिधातोः । इगुपधेति कप्रत्यये ईशः । शंभुरीशः पशुपति रित्यमरः । ईशः स्वामिनिरुद्रे च स्यादीशाहल दंडके । इति कोशांतरम् । सर्वभूता-शयस्थितः । सर्वाणियानि भूतानीति । पूर्वकालैक सर्वजरत् पुराण नवकेवलाः समानाधि-करणेन । २ । १ । २६ । इति समासे सर्वभूतानि तेषामाशयोऽन्तः करणमिति षष्ठी तत्पुरुषः । तत्र स्थित इति सप्तमीति योगविभागात् समासे रूपम् ।। यद्वा सर्वभूताशयः स्थितः इति पद द्वयम् तत्र । खर्परेशरिवा विसर्ग लोपोवक्तव्यः । वा० । इति विसर्ग लोपऊह्यः । आशेरते एकी-भूतानि भवंत्यस्मिन्निति । आङ् पूर्वात् शीङ् स्वप्ने इति धातोरधिकरणे । एरच् । ३ । ५६ । इत्यच् प्रत्यये गुणाऽऽयादेशयोः रूपम् ।। स्थाधातोरकर्मकत्वात् । गत्यर्थाऽकर्मक श्लिषशीङ् स्थास् वस् रुहजनजीर्यतिभ्यश्च । ३ । ४ । ७२ । इति कर्त्तरिक्त प्रत्यये । द्यतिस्यतिमास्थामित्ति-किति । ७ । ४ । ४० । इति आकारस्येत्वे गुणनिषेधे रूपम् ।। अर्थाज्जलाशयकासारादिवत् सर्वाण्येव भूतानि मयि एकीभावत्व मुपयान्तीतिभावः । स्थितः अचलः आत्मा अततीति अत-धातो रौणादिके मनिण् प्रत्यये उपधावृद्धौ रूपम् । अर्थान्निरंतरगतिविशिष्टत्वेन सर्वव्यापक-स्तथाभूतश्चाहं परमेश्वरः भूतानां प्राणिनां जंतूनां च । अभूवन् इति भूतानि भूधातोः ( गत्यर्थाऽकर्मक ) इत्यादिना कर्त्तरि क्तप्रत्यये । श्रयुकः किति । ७ । २ । ११ । इतीड् निषेधे गुणनिषेधे च भूतानि तेषाम् । युक्तेक्ष्मादा वृते भूतं प्राण्यतीते समेत्रिषु । इत्यमरः । भूतं क्ष्मादौ पिशाचादौ जंतौ क्लीवं त्रिषूचिते ।। प्राप्ये वृत्ते समेसत्ये देवयोन्यन्तरेतुना । इति मेदिनी । आदिः आदीयत इति आङ् पूर्वाद्दानार्थकदाञ् धातोः दाधाध्वदाप् । १ । १ । २० । इतिघु-

संज्ञायाम् ॥ उपसर्गे घोः किः । ३ । ३ । ६२ । इति कि प्रत्यये । आतो लोप इटिच । ६ । ४ । ६४। इत्याकारलोपे रूपम् ॥ पुंस्यादिः पूर्व पौरस्त्य प्रथमाद्याः । इत्यमरः । प्रथमः अर्थादुत्पत्ति स्थानम् । मध्यं च मांध्यायतीति ध्यैचिंतायां मितिधातोः । आदे च । ६ । १ । ४५ । इत्यैकारस्यात्वे । आतोऽनुपसर्गेकः । २ । २ । ३ । इति कप्रत्यये आकारलोपे । प्रत्ययोत्तरपदयोश्च । ७ । २ । ६८ । इति मपर्यन्तस्याऽस्मच्छब्दस्य मादेशेऽवो गुणे रूपम् । मायावलग्नयोर्मध्यमन्तरे चाधमेत्रिषु । इतिरभसः । अर्थात् स्थितिनिलयः । अन्तश्चाऽस्मि* । मृतावबसितेरम्ये समाप्तावन्त इष्यते । इतिशब्दार्णवे । अर्थाल्लयस्थानमप्यस्मीति भावः ॥ २० ॥

आदित्यानामहं विष्णुर्ज्योतिषां रविरंशुमान् ॥
मरीचिर्मरुतामस्मि नक्षत्राणामहं शशी ॥ २१ ॥

अहमादित्यानां शक्रार्यमप्रभृतीनां द्वादशादित्यानां मध्ये विष्णुनामादित्योऽस्मि ज्योतिषां प्रकाशकानामंशुमान् रविरस्मि मरूतां सप्त सप्तीकानां देवताभेदानां मरीचिनामाऽस्मि नक्षत्राणां शश्यस्मीत्यन्वयः ॥ २१ ॥

अहं परमेश्वरः आदित्यानाम् अदितेरपत्यानीति अदितिशब्दात् ( दित्यदित्यादित्यपत्युत्तर पदाण्ण्यः ) । ४ । १ । ८५ । इतिण्य प्रत्यये आद्यचो वृद्धौ भत्वादिकारलोपे आदित्यास्तेच " शक्रोऽर्यमा, धाता, त्वष्टा, पूषा, विवस्वान् सविता, मित्रो, वरुणः, अंशो, भग, श्चेतिद्वादश तेषाम् मध्ये ( यतश्च निर्धारणम् ) । २ । ३ । ४१ । इति निर्धारणे षष्ठी विष्णु नामादित्योऽस्मि दीयते हिंस्यते ऽनयेति दो अवखण्डने धातोः ( स्त्रियांक्तिन् ) । ३ । ३ । ९४ । इतिक्तिन् प्रत्यये ( आदे च उपदेशेऽशिति ) । ६ । १ । ४५ । इत्योकारस्यात्वे ( दाधाध्वदाप् ) । १।१ । २० । इतिघुसंज्ञायाम् ( घुमास्था ) । ६ । ४ । ६६ । इत्यादिना प्राप्तमीत्वं प्रबाध्य द्यतिस्यति मास्थामित्ति किति ) । ७ । ४ । ४० । इतीत्वे दितिः सा न भवतीति नञ् समासे न लोपे ऽदितिः यद्वा दोऽवखण्डने देङ् रक्षणे इतिधातोर्वा दिति रूपम् शाकटायनस्तु नददात्यशुभ मिति नञ् पूर्वाद् डुदाञ् दाने धातोः ( नञोदाञोडिति ) इति सूत्रयित्वा अदितिप्रयोगंसाधितवान् वेवेष्टीति विष्लृ व्याप्ता विति धातो रौणादिके ( विषेः किच्च ) । ३ । ३ ९ । इति नुप्रत्यये कित्वाद्गुणनिषेधे ( रषाभ्यांनोणः ) । ८ । ४ । १ । इत्यादिना णत्वे विष्णुर्वामनावतारोवा ज्योतिषाम् द्योतते द्योत्यते वेति दीप्त्यर्थाद्द्युत धातोरन्तर्भाविनणिजर्थात् औणादिके ( द्युतेरिसिन्नादेश्चजः ) । २ । ११० । इतीसन् प्रत्ययेदस्य जत्वेलघूपध गुणे ज्योतिः " ज्योतिरग्नौ दिवाकरे पुमान्नपुंसकं

* २० व्याख्यातम् ।

दृष्टौ स्यान्नक्षत्र प्रकाशयोः " इति मेदिनी अर्थात् प्रकाशकाना मग्न्यादीनां मध्येंऽशुमान् अंशवो· विद्यन्ते यस्येति अंशुशब्दात् ( तदस्यास्त्यस्मिन्निति मतुप् ) । ५ । २ । ९४। इति मतुप् प्रत्यये रूपम् अंशयतीति स्वार्थणिजन्तात् अंशविभाजने इति धातो रौणादिके (मृगय्वादयश्च) १ । ३७ । इति कुप्रत्यये तस्यार्ध धातुकत्वेनणेर्लोपे अंशुरिति अंशुर्लेशे रवौरश्मौ इति विश्वः अंशुः सूत्रादिसूक्ष्मांशे किरणेचंड दीधितौ । इति कोशांतरम् । तथा भूतो रविः सूर्योऽस्मि रूयते स्तूयते इति गम्यते सर्वैरेवाऽर्थिभिरिति वा रुशब्दे इतिधातोः रुङ् गताविविधातोर्वा । अचइः । ४ २ । ३६। इत्यौणादिके इप्रत्यये गुणावादेशयोः रूपम् । तपनः सविता रविः । इत्यमरः । तथामरुतां तत्संज्ञक देवविशे· षाणां सप्तसप्तकानां मध्ये म्रियते अशुभेन येषु इति मृङ् प्राणत्यागे इतिधातोः औणादिके मृग्रोरुतिः । १ । ९४ । इत्युति प्रत्यये तस्यार्ध धातुकत्वादङ्गस्यगुणे रपरे मरुतः इति । मरुतौ पवनाऽमरौ । इत्यमरः । मरुद्देवे समीरेना ग्रंथिपर्णे नपुंसक मिति मेदिनी । मरीचिः तत् संज्ञो देवविशेषो· ऽस्मि । म्रियतेतमोऽस्मिन्निति । मृङ् प्राणत्यागे इति धातोः । मृकणिभ्यामीचिः । ४ । ७० । इतीचिप्रत्यये गुणेरपरे मरीचिरिति । मरीचिर्मुनिभेदेना गभस्तावनपुंसकम् । इति कोशांतरम् ॥ स्त्रीपुंसाधिकारे–त्रुटि मसिमरीचय इति लिङ्गानुशासनम् " द्वयोः मरीचिः किरणो भानुरूस्रः करः पदम् " इति शब्दार्णवः । नक्षत्राणाम् ताराणां मध्ये निर्धारणे षष्ठी नक्षरन्तीति नक्षयन्तीति क्षरसंचलने क्षिक्षये इतिधातोर्वा । नञ् पूर्वात् । सर्वधातुभ्यः ष्ट्रन् । इत्यौणादिके ष्ट्रन् प्रत्यये पृषोदरादित्वा ट्टेरत्वे नक्षयन्तेनाश्यन्ते इति क्षद हिंसायामिति सौत्राद्धातोर्वा । गुधृवी पचि वचि यमिक्षदिभ्यः त्रः । ४ । १५६ । इत्यौणादिके त्रप्रत्यये । तितुत्रतथेत्यादिनेड् निषेधे चर्त्वे । नभ्राण् नपान्नवेदा नासत्या नमुचि नकुल नखनपुंसक नक्षत्र नक्र नाकेषुप्रकृत्या । ६ ।३ । ३५ । इति प्रकृति भावात् । नलोपोन ञः । ६ । ३ । ७३ । इति नकारलोपाऽभावे नक्षत्राणि । नक्षत्र मृक्षं भंतारा । इत्यमरः । शशी-शशधरोऽस्मि ।शशतीति शशप्लुतगताविति धातोः पचादित्वादचि शशः मृगजातिविशेषः । गंधर्वः शरभोरामः सृमारोगवयः शश इत्यमरः । सविद्यते नित्यंयस्येति । अत इनि ठनौ । ५ । २ । ११५ । इतीनिप्रत्यये भत्वादकारलोपे शशी इतिरूपम् ॥ २१ ॥

**वेदानां सामवेदोऽस्मि देवानामस्मि वासवः ॥**
**इन्द्रियाणां मनश्चास्मि भूतानामस्मि चेतना ॥ २२ ॥**

अहं परमेश्वरः वेदानां मध्ये सामवेदोऽस्मि तथा देवानां वासव इन्द्रः च पुनः इन्द्रियाणां मध्ये मनश्चेतोऽस्मि भूतानां सम्बन्धिनी चेतना स्मीत्यन्वयः ॥ २२ ॥

विदन्त्यर्थं यैरिति विद्ज्ञाने धातोः ( हलश्च ) । ३ । ३ । १२१ । इति घञ् प्रत्यये लघू· पधगुणे वेदा स्तेषाम् मध्ये ( यतश्चनिर्धारणम् ) इति षष्ठी " श्रुतिः स्त्री वेद आम्नाय " इत्यमरः " वेद श्रुतौ च वित्तौ च " इति कोशान्तरम् सामवेदोऽस्मि सामैव वेद इति कर्मधारय समासे

रूपम् स्वतिनाशयति पापमिति षोऽन्त कर्मणीति धातोः ( अन्येभ्योऽपि दृश्यन्ते ) । ३ । २ । ७५ इति मनिन् प्रत्यये ( आदेच उपदेशेऽशिति ) । ६ । १ । ४५ । इत्योकारस्य त्वे सामेति अर्थात्तस्य गानमाधुर्येणातिरम्यत्वा त्तद्रूपोऽहं मितिभावः देवानाम् रुद्रादित्यादीनाम् दीव्यति देवन्ते वेति क्रीडाद्यर्थाद् दिवुधातोः देवनार्थाद् देवृ धातोर्वा पचाद्यचि देवास्तेषाम् पूर्ववत् षष्ठी वासवो व्रत्रहास्मि वस्ते समाच्छादयति स्वमयया सर्वमिति उच्यते गुणै र्यस्मिन्निति आच्छादनार्थाद् निवासार्थाद्वा वस् धातो रौणादिके ( शृस्वृ स्निहि त्रप्यसि वसिहनि क्लिदि वन्धि मनिभ्यश्च ) इत्यु प्रत्यये वसुरिति "वसुर्मयूखाग्नि जनाधिपेषु योक्त्रे सुरेस्याद् वसु हाटके च वृद्धयौषधस्थान धनेषु रत्ने वसु स्मृतं स्यान्मधुरे ऽन्यवच्च" इति विश्वप्रकाशः "वसुर्ना देव भेदाग्नि भायोक्त्र वक राजसु क्लीवं वृद्धयौषधे श्यालेरै रत्ने मधुरे त्रिषु" इति मेदिनी वसवो देवा रत्नानिवा सन्त्यस्येति वसु शब्दात् ( ज्योत्स्नादिभ्य उप संख्यानम् ) । वा० । ५ । २ । १०३ । इत्यण् प्रत्यये आद्यचो वृद्धौ भत्वात् ( ओर्गुणः ) | ६ | ४ | १४६ | इति गुणेऽवादेशे च रूपम् यद्वावं प्रचेतस मस्यन्त्युपतापयन्तीति कण्ड्वादि स्वार्थयगन्तात् उपतापार्थात् अस् धातोः ( कर्मण्यण् ) । ३ । २ । १ । इत्यण् प्रत्यये तस्यार्धं धातुकत्वात् ( यस्य हलः ) । ६ । ४ । ४६ । इति यकार लोपे ( अतोलोपः ) । ६ । ४ । ४८ । इत्यकारलोपे ( अचः परस्मिन्पूर्वविधौ ) । १ । १ । ५७ । इत्यल्लोपस्य स्थानिवत्वा दुपधा वृद्धि निषेधे उपपद समासे दीर्घे वासाः वरुण लोकस्था दैत्या स्तान् वाति अभियाति वायति शोषयति स्वयाम्नेति गतिगन्धनार्थाद् वा धातोः शोषणार्थाद् ओवै धातोर्वा ( आतोऽनुपसर्गेकः ) । ३ । २ । ३ । इति क प्रत्यये आकार लोपे उक्त समासे वासवः वाति वानं वेति वाधातोः ( अन्येष्वपि दृश्यते ) । ३ । २ । १०१ । इति ड प्रत्यये टेर्लोपे वः इति "वं प्रचेतसि विजानीयात् इवार्थेतु तदव्ययम्" इति मेदिनी इन्द्रियाणाम् अर्थात् पायूपस्थादि कर्मेन्द्रियाणाम् मनोनेत्रादि ज्ञानेन्द्रियाणा मेषा मेकादशानामपि मध्ये इन्द्र आत्मा तस्य लिङ्गानीति करणेन कर्तुरनुमानात् इन्द्र शब्दात् ( इन्द्रिय मिन्द्रलिङ्ग मिन्द्रदृष्ट मिन्द्रसृष्ट मिन्द्रजुष्ट मिन्द्रदत्त मितिवा ) । ५ । २ । ६३ । इति निपातनाद् घच् प्रत्यये ( आयने यीनी ) इत्यादिना घस्येयादेशे भत्वादकारलोपे इन्द्रियाणि तेषाम् पू० षष्ठी इन्दति इति इदि परमैश्वर्ये इतिधातो रौणादिके ( ऋज्रेन्द्र ) । २ । २८ । इत्यादिना रन् प्रत्यये रूपम् "इन्द्रः शक्रादित्यभेदयोगभेदान्तरात्मसु इन्द्रः फणिज्जकेऽक्षीस्यात्" इति हैमः मनश्चास्मि मन्यतेऽनेनेति मनज्ञाने धातो रौणादिके ( सर्वधातुभ्योऽसुन् ) । ४ । १८६ । इत्यसुन् प्रत्यये रूपम् "मनश्चित्ते मनीषायाम्" इति कोषान्तरम् "स्वान्तं हृन्मानसंमनः" इत्यमरः भूतानां प्राणिनाम् भूत शब्दात् ( कर्तृ कर्मणोः कृतिः ) इति कर्तरि षष्ठी सम्बन्धेवा षष्ठी, "भूतं क्ष्मादौ पिशाचादौ प्राप्यतीते समेत्रिषु" इत्यमरः चेतना अर्थात् कार्यकरणसंघातेऽभिव्यक्ता बुद्धिवृत्ति रितिभावः चेतनमिति चेत्यतेऽनयेति वा स्वार्थणिजन्तात् संचेतनार्थात् चेति धातोः ( ण्यास श्रन्थो युच् ) । ३ । ३ । १०७ । इति युच प्रत्ययेऽनादेशे आर्धधातुकत्वादणेर्लोपे

स्त्रीत्वात् टापि दीर्घे रूपम् "चेतना संविदि स्त्रियाम्" इति कोषान्तरम् "प्रतिपज् ज्ञप्ति चेतना" इत्यमरः ॥ २२ ॥

**रुद्राणां शंकरश्चास्मि वित्तेशो यक्षरक्षसाम् ।**
**वसूनां पावकश्चास्मि मेरुः शिखरिणामहम् ॥ २३ ॥**

अहम् रुद्राणां मध्ये शङ्करोऽस्मि यक्ष रक्षसां च वित्तेशोऽस्मि तथा वसूनां मध्ये पावकोऽस्मि शिखरिणां च मेरु रित्यन्वयः ॥ २३ ॥

अहं परमेश्वरः रुद्राणाम् गणदेव विशेषाणाम् मध्ये रोदयन्तीति प्रयोजक णिजन्ता दश्रुविमोचनार्थाद् रोदिधातो रौणादिके ( रोदेर्णिलुक्च ) । २ । २२ । इति रक् प्रत्यये णेर्लुकि ( निमित्तापाये नैमित्तिकस्याप्यपायः ) इति गुणापाये रुद्राः "आदित्य विश्व वसव स्तुषिता भास्वरा निलाः महाराजिक साध्याश्च रुद्राश्च गणदेवताः" इत्यमरः तत्र "आदित्या द्वादश प्रोक्ताः विश्वे देवा दश स्मृताः वसवश्चाष्ट संख्याकाः षट्त्रिंशत्तुषितामताः आभास्वराश्चतुः षष्ठि र्वाताः पंचाशदूनकाः महाराजिक नामानो द्वेशते विंशति स्तथा साध्या द्वादश विख्याताः रुद्रा एकादशस्मृताः इति तेषाम् नि० प० शङ्करः शं सुखं करोति तच्छील: इति डुकृञ् करणे इति धातोः परं विशेषविहित मपि ( कृञो हेतु ) । ३ । २ । २० । इत्यादि टप्रत्ययं प्रबाध्य सत्यपि धात्वधिकारे ( शमिधातोः संज्ञायाम् ) । ३ । २ । १४ । इत्यत्र पुनर्धातु ग्रहणा दच् प्रत्यये तस्यार्ध धातुकत्वाद् गुणेरपरे रूपम् शाम्यति शमयतीति अन्तर्भावित णयर्थात् शमु धातो रौणादिके बहुलकाद् डम् प्रत्यये डित्वाट्टेर्लोपे मान्तत्वादव्ययत्वम् "शमिति सुखे" "ईश्वरः सर्व ईशानः शङ्करः" इत्यमरः यक्षाश्च रक्षांसि चैतेषा मितरेतर द्वन्द्वे यक्षरक्षांसि तेषाम् नि० ष० यक्ष्यन्ते पूज्यन्तेऽर्थार्थिभिरिति यक्ष पूजायामितिधातोः ( अकर्तरि च कारके संज्ञायाम् ) । ३ । ३ । १९ । इति कर्मणि घञ् प्रत्यये यक्षाः यद्वा अस्यापत्यम् इः काम स्तत्राक्षिणीनेत्रे अक्षाणीन्द्रियाणि येषां वेति व्यधिकरणपदबहुव्रीहिसमासे अक्षिशब्दान्तात् ( बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात् षच् ) । ५ । ४ । ४३ । इति षच् प्रत्यये ( षः प्रत्ययस्य ) इति षस्येत्वे भत्वादिकारलोपे यणि रूपम् यद्वा ईर्लक्ष्मी स्तस्या मेवाक्षो व्यवहारो न धर्मादिष्वधिक मिति पूर्ववत् समासादौ रूपम् अश्नुते व्याप्नोत्यनेनेति अशूङ् व्याप्तावितिधातोरौणादिके ( अशेर्नित् ) । ३ । १५६ । इति क्सि प्रत्यये ( व्रश्च भ्रस्ज ) । ८ । २ । ३६ । इत्यादिना षत्वे ( षढो कः सि ) । ८ । २ ।४१ । इति कत्वे षत्वे क्षत्वे अक्षीति यद्वा व्याप्त्यर्था दक्ष् धातोः औणादिके ( सर्वधातुभ्य इन् ) । ४ । ११८ । इतीन् प्रत्यये रूपम् "लोचनं नयनं नेत्र मीक्षणं चक्षु रक्षिणि" इत्यमरः अक्षतीति पचाद्यचि अक्षः अक्ष्यतेऽनेनास्मिन् वेति ( हलश्च ) । ३ । ३ । १२० । इति घञ् प्रत्यये वा रूपम् "अक्षः कर्षे तुषे चक्रे शकट व्यवहारयोः आत्मज्ञे

पाशके चाक्षं तुथे सौवर्चलेन्द्रिये" इतिविश्वः "अथाक्ष मिन्द्रिये ना द्यूताङ्गे कर्षे चक्रे व्यवहारे कलिद्रुमे" इत्यमरः "यक्षो गुह्यकमात्रे च गुह्यकाधीश्वरेऽपिच" इति कोषः रक्षन्त्येभ्य इति रक्ष-पालने इतिधातोः ( सर्वधातुभ्योऽसुन् ) । ४ । १८९ । इत्यौणादिकेऽसुन् प्रत्यये रक्षांसि "इकार उच्यते कामो लक्ष्मी रीकार उच्यते" इत्येकाक्षर कोशः वित्तेशोधनेशोऽस्मि वित्तस्येश इति षष्ठी समासे रूपम् यद्वा वित्तमस्ति येषामिति अर्श आदिभ्योऽच् इति अच् प्रत्यये मत्वा-दकारलोपे वित्ता धनिन स्तेषा मीशो नियन्तेति पूर्व० स० रूपम् अर्थात् धनवतां प्रायशः क्रूर कुटिलत्वेन हिंसापरायणत्वात् यक्षाणां रक्षोभिः सहसामान्यतो निर्देशः इतिभावः अवेदीति लाभार्थाद् विद्लृ धातोः विचारणार्थाद् विद्धातो र्वा कर्मणि ( निष्ठा ) । ३ । २ । १०२ । इति निष्ठा संज्ञकेक्त प्रत्यये एकाच्त्वादिण् निषेधे क्तित्वाद् गुण निषेधे ( रदाभ्याम् ) । ८ । २ । ४२ । इति नत्वस्य ( वित्तो भोग प्रत्यययोः ) । ८ । २ । ५८ । इति निषेधे ( नुदविदोन्दत्राघ्राह्रीभ्योऽन्यतरस्याम् ) । ८ । २ । ५६ । इति नत्वाभावपक्षे चर्त्वे वित्तम् तथाच भाष्यम् वेत्तेस्तु विदितो निष्ठा विद्यते र्विन्न इष्यते विन्ते र्विन्नश्च वित्तश्च भोगे वित्तश्च विन्दते इति "वित्तं क्लीवं धने वाच्य लिङ्ग' ख्याते विचारिते ' इतिमेदिनी ईष्टे इति ईश ऐश्वर्ये इतिधातोः इगुपधलक्षणे कप्रत्यये पचादित्वादच् प्रत्ययेवा रूपम् "ईशः स्वामिनिरुद्रे वा स्यादीशा हलदण्डके" इतिकोशः वसूनाम् ध्रुवाध्वरांप सोमनल प्रत्यूप प्रभास संज्ञानामष्टानाम् मध्ये वसति सर्वत्रोष्यते वेति वस्धातो रौणादिके उप्रत्यये रूपम् "वसुर्ना देव भेदाग्निः" इति मेदिनी पावकोऽग्निरस्मि पुनातीति पवनार्थात् पूञ् धातोः ( ण्वुल्तृचौ ) । ३ । ११३ । इति ण्वुल् प्रत्यये ( युवोरनाकौ ) । ७ । १ । १ । इत्यकादेशे णित्वाद् वृद्धा वावादेशे च रूपम्" पावकोऽग्नौ सदाचारे वन्हिमन्थेच चित्रके भिल्लातके विडङ्गे च शोधयितृनरेऽपिचेनि" कोषः तथा शिखरिणाम् पर्वतानां मध्ये शिखराणि सन्त्येषा मिति ( अत इन ठनौ ) । ५ । २ । ११५ । इतीनि प्रत्यये भत्वादकारलोपे शिखरिण स्तेषाम् शिखां चूडां रान्तीति रायन्तीति रादाने रै शद्वे वा धातोः ( आतोऽनुपसर्गेकः ) । ३ । २ । ३ । इति कप्रत्यये आतो लोपइटि चेत्याकारलोपे ( ङ्यापोः संज्ञाच्छन्दसो र्बहुलम् ) । ६ । ३ । ६३ । इति ह्रस्वे शिखराणि "कूटोऽस्त्री शिखरं शृङ्गम्" इत्यमरः शेते इति स्वप्नार्थात् शीङ् धातो रौणादिके ( शीङः किद्ह्रस्वश्च ) इति खप्रत्यये टापि दीर्घे शिखा "शिखा शाखा वर्हिचूडा लाङ्गलिक्यग्रमात्रके चूडामात्रे शिफायांच ज्वालायां प्रपदेऽपिच" इति मेदिनो मेरुः सुरालयोऽस्मि मिनोति प्रक्षिपति अत्युन्नतत्वान्नक्षत्रमण्डलमिति 'डुमिञ् प्रक्षेपणे इतिधातो रौणादिके ( मिपीभ्यांरुः ) । ४ । १२० । इति रुप्रत्यये गुणे रूपम् "मेरुः सुमेरु र्हैमाद्रिः" इत्यमरः ॥ २३ ॥

**पुरोधसांच मुख्यंमा विद्धि पार्थ बृहस्पतिम् ।**
**सेनानीना महं स्कन्दः सरसा मस्मि सागरः ॥ २४ ॥**

भो पार्थ पुरोधसां मध्ये देवराजपुरोहितत्वात् मुख्यम् बृहस्पतिं मां विद्धि तथा सेनानीनां मध्ये स्कन्दोऽहम् सरसां सागरोऽस्मीत्यन्वयः,

भो पार्थ पृथाया अयमिति ( तस्येदम् ) । ४ । ३ । १०२ । इत्यण् प्रत्यये (तद्धितेष्यचामादेः) । ७ । २ । ११७ । इत्याद्यचो वृद्धौ (यचिभम्) । १ । ४ । १८ । इति भत्वाद् (यस्येतिच) । ६ । ४ । १४८ । इत्याकारलोपे पार्थस्तत् सम्बुधौ रूपम् पर्थयति प्रक्षिपति दोषानिति चौरादिकात् प्रक्षेपार्थात् पृथुधातो रुदित् करणस्य णिज् विकल्पार्थत्वेन (इगुपधज्ञा) इत्यादिना कप्रत्यये गुण निषेधे टापि दीर्घे पृथा पुरोधसाम् पुरोऽग्रे सर्वेषु कर्तव्येषु धीयन्ते धार्यन्तेऽर्थात् पूज्यंते इति डुधाञ् धारण पोषणयो रितिधातो रौणादिके ( पुरसिच ) । ४ । २३१ । इति असि प्रत्यये तस्य डित्वेनटेर्लोपे पुरोधस स्तेषाम् मुख्यम् प्रधानम् मुखं प्रधान मेवेति मुख शब्दात् ( शाखादिभ्योयः ) । ५ । ३ । १०३ । इति यप्रत्यये भत्वादकारलोपे रूपम् खन्यतेऽनेनेति खनु अवदारणे इतिधातो रौणादिके ( डित्खने मुट्चोदात्तः ) । ५ । २० । इति अच् प्रत्यये तस्यडित्वात् टेर्लोपे धातो मुंडागमे मुखमिति "मुख मुपाये प्रारम्भे श्रेष्ठे निःसरणास्ययोः" इति हैमः तथाच "प्राक् खनो मुडुदात्तश्च ततोऽच प्रत्ययो भवेत् प्रजा सृजायतः खातं तस्मादाहु र्मुखं बुधाः" इति निरुक्तम् बृहस्पतिम् बृहतां पतिरिति षष्ठी समासे ( तद्बृहतोः करपत्योश्चोरदेवतयोः सुट् तलोपश्च ) । वा० । ६ । १ । १५७ । इति सुट् तलोपयो रूपम् "बृहस्पतिः सुराचार्यः" इत्यमरः तंमाम् वर्हन्तीति बृह वृद्धावितिधातो रौणादिके ( वर्तमाने पृषद् बृहन्महत् ) । २ । ८४ । इत्यति प्रत्यये बृहतः पातीति पा रक्षणे धातोः ( पातेर्डतिः ) उ० । ४ । ५७ । इति डति प्रत्ययेटेर्लोपे रूपम् "पतिर्धवे नाऽत्रिध्वीशे इति विश्वः। विद्धिविद्ज्ञाने इति धातो र्लोटो मध्यम पुरुषैकत्वे सिपितस्यह्यादेशेऽपित्वेन ङित्वेच शपोऽदा-दित्वाल्लुकि ( हुझल्भ्योहेर्धिः ) । ३ । ४ । १०१ । इति ध्यादेशे गुणनिषेधे रूपम् सेनानीनाम् सेनांनयन्तीति णिञ् प्रापणे धातोः ( सत् सू द्विष द्रुह दुह युज विद भिद जिनी राजामुप सर्गेऽपिक्विप् ) । ३ । २ । ६१ । इति क्विप् प्रत्यये :सेनान्यो वाहिनीपतय स्तेषां मध्ये "सेनानीः स्यात् पुमान् कार्तिकेये सेनापतौ पुमान्" इति मेदिनी सिनोति बध्नाति समूह मिति षिञ् बन्धने इति धातो रौणादिके ( कृवृजृ सिद्रु पन्यनि स्वपिभ्योनित् ) । ३ । १० । इति नप्रत्यये गुणेटापि रूपम् "ध्वजिनी वाहिनी सेना" इत्यमरः स्कन्दः पार्वतीनन्दनः स्कन्दति दैत्यानिति स्कन्दिर्गति शोषणयो रिति धातोः पचाद्यचि रूपम् सरसाम् जलाशयानाम् सरन्त्यापो येष्विति सृगताविति धातोः ( सर्वधातुभ्योऽसुन् ) । ४ । ८६ । उ० । इत्यसुन् प्रत्यये गुणेरपरे सरांसि तेषाम् "कासारः सरसीसरः" इत्यमरः "सरोनीरतडागयोः" इति रुद्रः सागरोऽर्णवोऽस्मि गरति जीवन मिति गृ निगरणे इति धातोः पचाद्यचि गुणेरपरे गरो विषम् "सोऽविद्यमानो येन मणिनामृतेनवेति" नञोऽस्त्यर्थानांवाच्यो वाचोत्तरपदलोपः, इति समासे न लोपेऽगर स्तेन सह वर्तमान इति ( तेन सहेति तुल्ययोगे ) । २ । २ । २८ । इति बहुव्रीहि समासे ( वोपसर्जनस्य ) । ६ । ३ । ८२ । इति सहस्य सादेशे सवर्ण दीर्घे सागरः सगरस्याय मिति तस्येद मित्यणि आद्यचोवृद्धौ भत्वादकार लोपे वा रूपम् ॥ २४ ॥

**महर्षीणां भृगुरहं गिरा मस्म्येक मक्षरम् ॥**
**यज्ञानां जप यज्ञोऽस्मि स्थावराणां हिमालयः ॥ २५ ॥**

अहं महर्षीणां* मध्ये भृगुरस्मि तथा गिरांवाणीनां मध्ये एक मक्षरम् यज्ञानां तु जप यज्ञोऽस्मि स्थावराणां हिमालयः इत्यन्वयः ॥

महर्षीणाम् महान्तश्चते ऋषय स्तेषाम् मध्येऽतितेजस्वित्वादहम् भृगुरस्मि ( भृज्जति तपसेति भ्रस्ज पाके धातोः ( प्रथिम्रदि भ्रस्जां सम्प्रसारणं सलोपश्च ) उ० । १ । २८ । इति कु प्रत्यये सम्प्रसारण सलोपयोः ( न्यङ्क्वादिषु च ) । ७ । ३ । ५३ । इति कुत्वे भृगुः " भृगुः सानौ जमदग्नि प्रपातयोः शुक्रे रुद्रे च " इति हैमः " भृगुः शुक्रे प्रपाते च जमदग्नौपिनाकिनि " इति विश्वः गिरां वाचां मध्ये गीर्य्यन्ते समुच्चार्यन्ते इति गॄ शब्दे इति क्रैयादिकात् धातोः ( सम्पदादिभ्यः क्विप् ) । वा० । ३ । ३ । १०८ । इति क्विप् प्रत्यये ( ॠत इद् धातोः ) । ७ । १ । १०० । इतीत्वेरपरत्वे गिरः " गीः स्त्री भाषा सरस्वत्योः " इ० कोषः " ब्राह्मी वचनं वाचा जल्पितं गदितं गिरा " इति शब्दार्णवः इत्यत्रंतु भागुरीमते आप् प्रत्ययो बोध्यः तासामर्थात् वाक्यपदलक्षणानाम् नि० ष० एकमद्वितीयम् एतीति इण् गताविति धातोः ( इण् भीका पाशल्यतिमर्चिभ्यः ) । उ० । ३ । ४३ । इति कन् प्रत्यये गुणे रूपम् " एकं संख्यान्तरे श्रेष्ठे केवलेतरयो स्त्रिषु " इति मेदिनी अक्षरम् वर्णम् अश्नुतेव्याप्नोतीति अशूङ् व्याप्तौ धातोः ( अशेः सरन् ) उ० । ३ । ७० । इति सरन् प्रत्यये ( तितुत्रतथ सि सुसर कसेषु च ) इतीड् निषेधे व्रश्चेति षत्वे षढोरितिकत्वे षत्वे क्षत्वेऽक्षरम् नक्षरतीति नञ् पूर्वात् क्षरसंचलने धातोः पचाद्यचि नलोपेवा रूपम् " मोक्षेऽपवर्गे ओं ब्रह्मण्यच्युतेऽक्षरम् " इत्यनेकार्थकोषः " अक्षरं स्यादपवर्गे परमब्रह्मवर्णयोः " इति हेमचन्द्रः अर्थादोंकारोऽस्मि यज्ञानाम् मखाना मात्मनां वा मध्ये यजनमिति इज्यते ऽनेन यत्रेतिवा पूजाद्यर्थाद् यज् धातोः ( यज याचयत विच्छ प्रच्छरक्षोनङ् ) । ३।३ । ९० । इति नङ् प्रत्यये श्चुत्वे रूपम् " यज्ञः स्यादात्मनिमखे नारायण हुताशयोः " इति हैमः, जपयज्ञो, ऽस्मि जप एव यज्ञ इति कर्मधारय समासे रूपम् जपन मिति जप्यतेऽसाविति वा जप मानसे चेति धातोः ( व्यधजपोरनुपसर्गे ) । ३ । ३ । ६१ । इत्यप् प्रत्यये रूपम् अर्थात् सर्वेषामेव मखानां मध्ये हिंसादिदोषरहितत्वेनोत्कृष्टतरः स्वाध्यायरूपो मखः आत्मनां तु स्वाध्यायसन्वलित आत्मास्मीति भावः अत्र पक्षे जपो विद्यते यस्येति अर्श आद्यजन्तेन समासो ज्ञेयः स्थावराणाम् स्थिति शीलानां तरु शैल प्रभृतीनां मध्ये तिष्ठन्तितच्छीला इति ष्ठागतिनिवृत्ता विति धातोः ( स्थेशभास पिश कसोवरच् ) । ३ । २ । १७५ । इति वरच् प्रत्यये स्थावरास्तेषाम् " स्थावरो जङ्गमेतरः " इत्यमरः हिमालयोऽस्मि हिमस्यालय इति षष्ठी तत्पुरुषः हन्त्या-

* व्याख्यातम् ।

तापादि विकार मिति हिंसाद्यर्थाद् हन् धातो रौणादिके ( हन्तेर्हि च )। १ । १४७ । इतिमन् प्रत्यये धातोर्ह्यादेशे रूपम् " हिमं तुषार मलयोद्भवयोः स्यान्नपुंसकम् शीतले वाच्यलिङ्ग इति मेदिनी आलीयते यत्रेति आङ् पूर्वात् लीगताविति धातोः ( एरच् ) । ३ । ३ । ५६ । इत्यच् प्रत्यये ( पुंसि संज्ञाया मिति घ प्रत्यये वा गुणायादेशयो रूपम् ) " निकाय्य निलयालयाः " इत्यमरः अर्थादति महत्वेनरत्नमयत्वेन श्रेष्ठः ॥ २५ ॥

**अश्वत्थः सर्व वृक्षाणां देवर्षीणां च नारदः ॥**
**गन्धर्वाणां चित्र रथः सिद्धानां कपिलो मुनिः ॥ २६ ॥**

अहम् सर्व वृक्षाणां मध्येऽश्वत्थोऽस्मि एवम् देवर्षीणाम् नारदः तथा गन्धर्वाणां मध्ये चित्र रथोऽस्मि सिद्धानां कपिल नामा मुनिरित्यन्वयः ॥

अहम् परमेश्वरः सर्ववृक्षाणांसर्वे तरूणां सर्वेचते वृक्षा इति (पूर्वकालैक सर्व जरत्पुराण नव केवलाः समानाधिकरणेन )। २ । १ । ३६ । इति समासे सर्वे वृक्षाः वृश्च्यन्ते छिद्यन्तेऽर्थिभिरिति ओ व्रश्चू छेदने इति धातो रौणादिके ( स्नुव्रश्चिकृत् ऋषिभ्यः कित् )। ३ । ६६ । इति स प्रत्यये तस्य कित्वात् ( ग्रहिज्यावयि व्यधिवष्टि विचति वृश्चति पृच्छति भृज्जतीनां ङिति च )। ६ । १ । १६ । इति सम्प्रसारणे पूर्व रूपे ( व्रश्च भ्रस्ज )। ८ । २ । ३६ । इत्यादिना षत्वे ( षढोः कः सि )। ८ । २ । ४१ । इति कत्वे षत्वे क्षत्वे च वृक्षा स्तेषामपूर्ववत् षष्ठी, ( वृक्षो महीरुहः शाखी विटपी पादपस्तरुः ) इत्यमरः। अश्वत्थोऽस्मि अश्नुते इति अशूङ् व्याप्ताविति धातो रौणादिके ( अशूप्रुषि लषि कणि खटि विशिभ्यः क्वन् ) इतिं क्वन् प्रत्यये रूपम् अश्वः पुंजाति भेदे च तुरंगे च पुमानयम् ( इति मेदिनी ) ( अश्वः पुंभेद वाजिनो ) इति विश्वः स इवतिष्ठतीति ( सुपिस्थः ) ।३ । २ । ४ । इति क प्रत्यये आकारलोपे पृषोदरादित्वात् सस्यतत्वेऽश्वत्थः इति अर्थात् पुंजाति विशेषवच् चैतन्यशक्तिविशिष्टत्वेन श्रेष्ठतर इति भावः यद्वा न श्वश्चिरं तिष्ठतीति पूर्ववत् प्रत्यये नञोनस्य लोपे रूपम् ) यद्वा आपः प्रजाहितं शीत मश्वत्थं पवनं विषम्, इति केशरमालाभिघानात् जलवाचकात् अव्युत्पन्नादश्वत्थशब्दात् अश्वत्थं विद्यते यस्मिन्निति । अर्श आदिभ्योऽच् ) । ५ । २ । १२७ । इत्यच् प्रत्यये भत्वादकारलोपे रूपम् । अर्थात् सरसत्वेन चिरस्थितिशीलत्वात्तस्मात्श्रेष्ठत्व मितिभावः । देवर्षीणाम् देवा श्चते ऋषयः इति कर्मधारय समासे देवानामृषय इति षष्ठीति समासे वा देवर्षयस्तेषां मध्ये इति पूर्ववत् षष्ठी । ( नारदाद्याः सुरर्षय इत्यमरः ) दीव्यन्तीति देवाः * । ऋषन्त्यधिगच्छन्ति श्रुति तत्व मिति ऋषयः ( ऋषिर्वेदे वशिष्ठादौ ) इति मेदिनी अर्थात् देवाः सन्तोऽपि ब्रह्म पुत्रत्वेन मन्त्रदर्शीत्वात् देवर्षयो वशिष्ठादयस्तेषाम् मध्येऽहंनारदो × ऽस्मि गन्धर्वाणां मध्ये गन्धर्वगर्वे

* व्याख्यातम् ११, × व्याख्यातम् श्लोक १३.

अर्वन्ति गच्छन्ति इति अर्वगताविति धातोः ( कर्मण्यण् ) ३।२।१। इत्यणप्रत्यये शकन्ध्वादे-राकृति गणत्वात् पररूपे रूपम् ( गन्धर्वस्तु नभश्चरे पुँस्कोकिले गायने च मृग भेदे तुरंगने अन्तराभव देहेच ) इति हैमः, गन्धयतीति गन्ध अर्दने इति स्वार्थणिजन्तात् कर्तरि पचाद्यचि गन्ध्यते इति ( अकर्तरि च ) ३।३।१९। इति घञ् प्रत्यये वा आर्धधातुकत्वाद् णेर्लोपे गन्धः ( गन्धो गन्धक आमोदे लेशे सम्बन्धगर्वयोः ) इति विश्वः, गन्धः सम्बन्धलेशयोः गन्धकामोदगर्वेषु, इति हैमः, * यद्वा गन्धे आमोदे सम्बन्धे गर्वे वा अर्वागतिर्येषामिति व्यधिकरणपदबहुव्रीहिसमासे ( गोस्त्रियोरिति ह्रस्वे गन्धर्वास्तेषाम् ) अर्वणमिति अर्वधातोः स्त्रीत्वेभावे ( गुरोश्चहलः ) ३।३।१०३। इत्यकारप्रत्यये टापि दीर्घे अर्वेति रूपम् यद्वा गन्धः सम्बन्धादिः अर्वः कुत्सितो येषामिति बहुव्रीहि समासे रूपम्। ऋच्छति अर्यते वेति ऋगता विति धातो रौणादिके। ( अशुप्रुषिलटिकणिखटिविशिभ्यः क्वन् ) ... ( अव्यावमाधमावर्व रेफाः कुत्सिते ) ५।५४। इति वन् प्रत्ययेऽनुबन्धलोपे आर्धधातुकत्वादङ्गस्य गुणे परे अर्व इति ( अर्व स्तुरङ्गमे पुंसि कुत्सिते वाच्यलिङ्गकः ) इति मेदिनी, चित्ररथः चित्र मद् भुतंरथः स्यन्दनो यस्य स इति बहुव्रीहि समासे रूपम् यद्वा चित्रा माया विद्यते येष्विति मायावाचकात् चित्राशब्दात् ( अर्श आदि-भ्योऽच् ) ५।२।१२७। इत्यच् प्रत्यये भत्वादाकारलोपे चित्रास्तथा भूतारथा अवयवावा यस्येति रूपम्, चिनोति चीयते वेति चिञ् चयने इति धातो रौणादिके ( अमिचिमिदि शसिभ्यः क्त्रः ) इति क्त्र प्रत्यये कित्वाद् गुणनिषेधे चित्रमिति यद्वा चित्र चित्रीकरणे इति स्वार्थणि जन्तात् चित्रयतीति पचाद्यचि णेर्लोपे रूपम् आलेख्याश्चर्ययोश्चित्रम्। इत्यमरः चित्राखुपर्णि गोडुम्बासुभद्रादन्तिकासु च मायायां सपनक्षत्रे नदीभेदेषु च स्त्रियाम् तिलका लेख्ययोः क्लीबं कर्बुराद्भुतयो स्त्रिपतद् युक्तयोर्वाच्यलिङ्ग चित्रीभिल्यां नपुंसकम् गोस्तने वस्त्र भेदेच रेखालि-खन भेदयोः, इति मेदिनी, चित्रंखेतिलकेऽद्भुते, आलेख्ये कर्बुरे चित्रात्वाखुवर्णीसुभद्रयोः, गोडुम्बाप्सरसोर्दन्त्यां नक्षत्रोरगभेदयोः, इति हेमचन्द्रः रमन्तेयत्र येनेति रमु क्रीडाया मिति धातो रौणादिके ( हनिकुषिनीरमि काशिभ्यः क्थन् ) २।२। इति क्थन्प्रत्यये तस्यकित्वात् ( अनुदात्तोपदेशवनतितनोत्यादीनाम् ) ६।४।३७। इत्यादिनानुनासिक लोपे रथ इति ( रथः पुमान वयवेस्यन्दने वेतसेऽपि च ) इति मेदिनी अर्थात् माया सम्बलित स्यन्दनत्वात् माया बलितावयवत्वाच्चान्वर्थसंज्ञकत्वेन गन्धर्व राजत्वात् श्रेष्ठत्व मितिभावः सिद्धानां व्यासादीनां मध्ये पूर्ववत् षष्ठी सिध्यन्ति स्मेति षिध संराद्धाविति सेधन्तिस्मेति षिधु गत्यामितिधातोः ( गत्यर्था कर्मक ) ३।४।७२। इत्यादिना कर्तरिक्त प्रत्यये दैवादिकस्यानिट्कत्वात् भौवादिक-स्योदित्वेन ( उदितोवा ) ७।२।५६। इति क्त्वा प्रत्यये वेट्त्वात् ( यस्यविभाषा ) इतीड् निषेधे ( झषस्तथोर्धोऽधः ) ८।२।४०। इति धत्वे जश्त्वे च सिद्धास्तेषाम् ( सिद्धो व्यासादिके देवयोनौ निष्पन्नमुक्तयोः नित्ये प्रसिद्धे, इति हैमः। कपिलः कवते वर्णयति स्वधर्म मिति कवृवर्णे इति धातोः कामयते इच्छति चापवर्ग मिति कम कान्तौ इति धातोर्वा औणादिके (कवेः)

कमेः पश्च इतीलच् प्रत्यये धातोः पकारान्तादेशे कपिलः यद्वा कपिम् वासुदेवं लात्यादत्ते इति ला दाने इति धातोः ( आतोऽनुपसर्गे कः ) ३ । २ । ३ । इति कप्रत्यये कित्वादाकार लोपे उपपद समासे रूपम् ( कपिलारेणुकायांच शिंशिपा गोविशेषयोः पुण्डरीक करिण्यां स्त्री वर्णे भेदे त्रिलिङ्गकम् नानले वासुदेवे च मुनिभेदे च कुक्कुरे, इति मेदिनी कम्पते संचालयत्यरीनिति कपि संचलने इति धातो रन्तर्भावित णिजर्था दौणादिके ( कुडि कम्प्योर्नलोपश्च ) ४ । १४४ । इतीन् प्रत्ययेरूपम् ( कपिर्नालिह्के शाखामृगेच मधुसूदने ) इति विश्वमेदिन्यौ मुनिः मन्यते जानाति सर्वमिति मन ज्ञाने इति धातो रौणादिके ( मनेरुच्च ) ४ । १२३ । इतीन् प्रत्यये अकारस्योकारे रूपम् ( मुनिः पुंसिवशिष्ठादौ वङ्गसेनतरौ जिने ) इति अर्थात् जनुषैवाधिगततत्वेन धर्म ज्ञान वैराग्यैश्वर्यातिशयभाजां व्यासवशिष्ठादीनां मध्येऽहं कपिलसंज्ञिकोऽन्वर्थ संज्ञो मुनि रस्मीतिभावः ॥ २६ ॥

**उच्चैः श्रवसमश्वानां विद्धिमाममृतोद्भवम् ।**
**ऐरावतं गजेन्द्राणां नराणां च नराधिपम् ॥ २७ ॥**

अश्वानां मध्ये अमृतोद्भवं उच्चैः श्रवसं मां विद्धि तथा गजेन्द्राणां ऐरावतम् नराणां मध्ये नराधिपं मां विद्धीत्यन्वयः ॥

अश्नुवते व्याप्नुवन्तीति अशूङ् व्याप्ताविति धातो रौणादिके, ( अशूप्रुषि लटि कणि खटि विशिभ्यः कन् ) १ । १५१ । इति कन् प्रत्यये अश्वाः ( घोटके पीति तुरग तुरङ्गा श्वतुरङ्गमाः ) इत्यमरः ( अश्वः पुंजातिभेदेच तुरगेच पुमानयम् ) इति मेदिनी, अश्वः पुंभेद वाजिनोः, इति विश्वः तुरगा स्तेषांमध्ये पूर्ववत् षष्ठी अमृतोद्भवम् अमृताज्जलात् अर्थादमृताय देवासुरोन्मथितसागरीयादुद्भवो जन्म यस्य स इति व्यधिकरणपद बहुव्रीहि समासे ऽमृतोद्भवस्तम् कर्मणिद्वितीया यद्वा अमृतायार्थात् सुरेन्द्रायोद्भव उत्पत्तिर्यस्य स तम् म्रियतेऽनेन इति मृङ् प्राणत्यागे इति धातो रौणादिके ( तनिमृङ् भ्यांकिच्च ) इति तन् प्रत्यये तस्य कित्वाद् गुण निषेधे यद्वास्य धातोरकर्मकत्वेन ( गत्यर्था कर्मक ) ३ । ४ । ७२ । इत्यादिना कर्तरिक्त प्रत्यये रूपम् ( मृतंमृत्यौ याचितेच ) इति विश्वः ( मृतंतुयाचिते मृत्यौ क्लीवं मृत्युमति-त्रिषु ) इति मेदिनी, नमृत मितिनञ् समासे न लोपे रूपम् ( अमृतंयज्ञशेषे स्यात् पीयूषे सलिले घृते अयाचितेच मोक्षेचना धन्वन्तरि देवयोः ) इति हारावली उद्भवन मिति उत्पूर्वाद् भूधातोः ( ऋदोरप् ) ३ । ३ । ५७ । इत्यप् प्रत्यये गुणावादेशयोः रूपम् ( जनिरुत्पत्तिरुद्भवः ) इत्यमरः उच्चैः श्रवसम् उच्चै रुन्नते श्रवसी कर्णौ यस्यस इति बहुव्रीहि समासे उच्चैःश्रवास्तम् यद्वोच्चै-र्महच्छृणोति श्रूयते वेति श्रुश्रवणे इति धातो रौणादिके ( सर्वधातुभ्योऽसुन् ) ४ । १८६ । इत्यसुन् प्रत्यये गुणावादेशयोः उच्चैःश्रवास्तम् उच्चिनोति उच्चीयते वेति उत् पूर्वात् चिञ्

चयने इतिधातो रौणादिके ( उदिचेर्डैसिः ) ५ । १२ । इति डैस् प्रत्यये डित्वाट्टेर्लोपे सन्धि कार्ये उच्चैः ( महत्युच्चैः ) इत्यमरः मां परमेश्वरम् विद्धि जानीहि अर्थाद् देवेन्द्रवाहनत्वादिना श्रेष्ठतरत्वमस्येति भावः विद् ज्ञाने इति धातोर्लोटो मध्यमपुरुषैकत्वे सिपि सेर्ह्यादेशे शपि तस्यादादित्वाल्लुकि ( हुझल्भ्यो हेर्धिः ) ६ । ४ । ११ । इति ध्यादेशे रूपम् तथा गजेन्द्राणाम् गजानां दन्तिनामिन्द्राः स्वामिनः इति षष्ठीति समासे गजेन्द्रा स्तेषां पूर्ववत् षष्ठी गजन्तीति गज मदने इतिधातोः पचादेराकृति गणत्वादचि गजाः ( मतङ्गजो गजो नागः कुञ्जरो वारणः करी) इत्यमरः, इन्दतीति इदि परमैश्वर्ये इति धातो रौणादिके ( ऋज्रेन्द्र ) २ । २८ । इत्यादिना रन् प्रत्यये इन्द्राः इरा उदकानि विद्यन्तेऽतिशयतानि नित्यानि यस्मिन्निति ( तदस्यास्त्यस्मिन्निति- मतुप् ) ५ । २ । ६४ । इति मतुप् प्रत्यये ( मादुपधायाश्चमतोर्वोऽयवादिभ्यः ) २ । २ । ६ । इति मस्यवत्वे इरावान् समुद्रः तत्र संभूत इति ( संभूते ) ४ । ३ । ४२ । इति ( तत्रजातः ) ४ । ३ । २५ । इति वाण् प्रत्यये आद्यचो वृद्धौ ऐरावतस्तम् एति ईयते वेति इण् गताविति धातो रौणादिके ( ऋज्रेन्द्राग्र ) २ । २८ । इत्यादिनारन् प्रत्यये गुणाभावेनिपातनात् रूपम् ( इराभू- वाक् सुराप्सुस्यादित्यमरः ) इं कामं रातीति रा दाने इतिधातोः ( आतोऽनुपसर्गेकः ) ३ । २ ।३ इति क प्रत्यये कित्वादाकारलोपे टापि दीर्घेवारूपम् नराणाम् मध्ये नरन्ति नृणन्तीति वेति नृनये इति धातोः पचाद्यचि गुणे रपरे नरास्तेषाम् पूर्ववत् षष्ठी ( नरोऽजे मनुजेऽर्जुने क्लीबंतुराम कर्पूरे ) इति मेदिनी नराधिपम् नराणाम् मनुष्याणामधिपः प्रभुरिति षष्ठीति समासे नराधि- पस्तम् ( मनुजा मानवाः नराः ) इत्यमरः अधिपाति रक्षतीति अधिपूर्वात् पारक्षणे इति धातोः ( आतश्चोपसर्गे ) ३ । १ । १३६ । इति कर्तरि क प्रत्यये कित्त्वादाकारलोपेऽधिप इति ( अधि भूर्नायकोनेता प्रभुः परिवृढाऽधिपः) इत्यमरः मां विभूतिभूतं परमेश्वरम् विद्धि अवगच्छ ॥२७॥

वज्रं

**आयुधाना महं [redacted] धेनूनामस्मि कामधुक् ।**
**प्रजनश्चास्मि कंदर्पः सर्पाणामस्मि वासुकिः ॥ २८ ॥**

अहं मायुधानां शस्त्राणां मध्ये वज्रमस्मि धेनूनां गवां मध्ये कामधुगस्मि तथा कंदर्पस्तु कामस्तु प्रजनोऽस्मि सर्पाणां मध्ये वासुकि आसमीत्यन्वयः ॥ २८ ॥

आसमन्ताद् युध्यन्ते यैरिति आङ् पूर्वाद् युध सम्प्रहारे इतिधातोः ( घञर्थेक विधा- नम् ( स्थास्ना पाहनि युध्यर्थम् ) वा० ३ । ३ । ५८ । इतिक प्रत्यये कित्वाद् गुणनिषेधे आयु- धानि तेषाम् पूर्ववत् षष्ठी ( आयुधंतु प्रहरणम् शस्त्रमस्त्र मथास्त्रियौ ) इत्यमरः वज्रम् दम्भो- लिरस्मि वजतीति वज गतावििति धातो रौणादिके ( ऋज्रेन्द्र ) १ । २८ । इत्यादिनारन्प्रत्यये रूपम् ( वज्रोऽस्त्री हीरके पवौ ) इत्यमरः ( वज्रं स्याद् बाधके धात्र्यां क्लीवं योगान्तरेपुमान् वज्रास्तुह्यां गुडुच्यांच वज्रीस्नुह्यन्तरे स्मृता दम्भोलौ हीरकेऽप्यस्त्री वज्रं त्रपुवरत्रयोः ) इति

मेदिनी, धेनूनाम् धीयन्ते इति धेट पाने इति धातोरौणादिके ( धेटइच ) ३ । ३४ । इति नु प्रत्यये इत्वेच धेनव स्तासाम् षष्ठी पूर्ववत् ( धेनुः स्यान्नवप्रसूतिका ) इत्यमरः कामधुक् काममिच्छां-दोग्धीति दुह प्रपूरणे इतिधातोः ( सत्सूद्विषद्रुह दुह युज विद भिद छिद जिनी राजामुपसर्गेऽपिक्विप् ) ३ । २ । ६१ । इति क्विप् प्रत्यये तस्य कित्वाद गुणनिषेधे उपपद समासे रूपम् कम्यते इति कमुकान्ताविति धातोः ( अकर्तरिचकारके संज्ञायाम् ) ३ । ३ । १६ । इति कमनमिति (भावे) ३ । ३ । १८ । इति वाघञ् प्रत्यये ( अनाकमिचमिवमीना मिति वाच्यम् ) वा० इति प्रत्यस्य ञित्वेनोपधा वृद्धौ रूपम् ( इच्छामनोभवौ कामौ ) इत्यमरः ( कामः स्मरेच्छयोः पुमान् रेतस्यपिनिकामेचकाम्येऽपिस्यान्नपुंसकम् ) इति मेदिनी तथाहम् कन्दर्पः कामः कंकुत्सितोदर्पो यस्य स इति बहुव्रीहि समासे रूपम् कमिति वारिमूर्द्धनिन्दासुखेष्वव्ययम् ( स्वरादि निपातमव्ययम् ) १ । १ । ३७ । इति यतस्तस्य खलु स्वरादिषु पाठात् यद्वा कम् सुखं दर्पयतीजि प्रयोजकणिजन्ताद् हर्षमोहनार्थाद् दर्पि धातोः ( कर्मण्यण् ) ३ । २ । १ । इत्यण् प्रत्यये तस्यार्ध धातुकत्वेन ( णेरनटि ) ६ । ४ । ५१ । इति णेर्लोपे उपपद समासे रूपम् ( कन्दर्पो दर्पकोऽनङ्गः कामः पञ्चशरः स्मरः ) इत्यमरः कायतीति शब्दार्थात् कै धातोः कचतीति बन्धनार्थात् कच धातोर्वा ( अन्येष्वपि दृश्यते ) ३ । २ । १०१ । इत्यत्रापि शब्दस्य सर्वोपाधिव्यभिचारार्थकत्वेन केवलादपिड प्रत्यये डित्त्वात् टेर्लोपे कमिति को ब्रह्मणि समीरात्मयमदक्षेषु भास्करे मयूरेऽग्नौचपुंसि स्यात् सुखशीर्षजलेषुकम्, इति मेदिनी प्रजनोऽस्मि प्रजनयत्युत्पादयतीनि प्रपूर्वात् प्रयोजकणिजन्तात् प्रादुर्भावार्थाद् जनि धातोः पचादित्वादचि णेर्लोपे प्रजनः अर्थात् प्रजोत्पादनहेतुभूतो नतुव्यभिचारसाधनीभूतः तस्य शास्त्रनिषिद्धत्वेनैहिलौकिकपारलौकिकानिष्टजनकत्वादिति भावः सर्पाणाम् सर्पन्तीति सृप्लृ गताविति धातोः पचादेराकृतिगणत्वादचि लघूपधगुणे सर्पाः यद्वा सर्पणमिति तस्मादेव धातोर्भावे ( भावे ) ३ । ३ । १८ इति घञ् प्रत्यये गुणे सर्पः गतिः सविद्यते कुत्सितो येषामिति ( अर्श आद्यच् ) ५ । २ । १२७ । इत्यच् प्रत्यये भत्वादकारलोपे सर्पास्तेषाम् पूर्ववत् षष्ठी ( सर्पपृदाकुर्भुजगो भुजंगोहि र्भुजङ्गमः ) इत्यमरः वासुकिः वसुरत्नं के मूर्ध्नि यस्येति बहुव्रीहि समासे वसुकायतीति शब्दार्थात् कै धातोर्वा ( आतोऽनुपसर्गेकः ) ३ । २ । ३ । इति क प्रत्यये तस्य कित्वात् ( आतोलोपइटि चेत्याकार लोपे उपपद समासे वसुकस्तस्या पत्यं पुमानिति ( अत इञ् ) ४ । १ । ६५ । इतीञ् प्रत्यये ( तद्धितेष्वचामादेः ) ७।२।११७। इत्याद्यचो वृद्धौ भत्वादकारलोपे रूपम ( वासुकिस्तुसर्पराजः ) इत्यमरः वसति सर्वत्रोष्यते वेति वस निवासे इति धातो रौणादिके ( शृस्वृस्निहि ) १ । २८ । इत्यादिनोकार प्रत्यये रूपम् ( रत्ने धने वसु ) इत्यमरः वसुर्नादेव भेदाग्नि भायोक्त्रवकराजसु क्लीवं वृद्धयौषधे श्यालेरैरत्ने मधुरेत्रिषु ) इति मेदिनी अर्थात्तस्य मद्विभूतित्वेन सोऽहमेवास्मीति भावः ॥ २८ ॥

**अनन्त श्चास्मिनागानां वरुणो यादसा महम् ।**
**पितॄणा मर्यमा चास्मि यमः संयमता महम् ॥२९॥**

अहं परमेश्वरः नागानाम् सर्पाणां मध्ये न गच्छन्तीति नञुपपदाद् गम्लृ गताविति धातोः ( अन्यत्रापि दृश्यते इतिवक्तव्यम् ) वा० ३ । २ । ४८ । इति ड प्रत्यये डित्वाट्टेर्लोपे ततो-नञ् समासे ( नलोपोनञः ) ६ । ३ । ७३ । इति प्राप्तस्य नञोनस्य ( नगोऽप्राणिष्वन्यतरस्याम् ) ६ । ३ । ७७ । इति वैभाषिके प्रकृति भावे नगाः पर्वताः ( शैल वृक्षौ नगावगौ ) इत्यमरः ( नगो-महीरुहे शैले भास्करे पवनाशने ) इति हैमः तत्र भवाः इति ( तत्रभवः ) ४ । ३ । ५३ । इति शैषिकेऽण् प्रत्यये आद्यचो वृद्धौ भत्वादकारलोपे नागाः यद्वा अगन्ति कुटिलं गच्छन्तीति अग कुटिलायां गताविति धातोः पचादित्वा दचि अगाः अर्थाद् कुटिलगामिनः सर्पावान्तरभेदाः ततः न अगा इति ( सुप्सुपा ) २ । १ । ४ । इति समासे सवर्णदीर्घे नागास्तेषाम् पूर्ववत् षष्ठी अनन्तः शेषोऽस्मि अविद्यमानोऽन्तोयस्य स इति ( नञोऽस्त्यर्थानां वाच्यो वाचोत्तरपदलोपः ) वा० इति बहुव्रीहिसमासे नलोपे ( तस्मान्नुडचि ) ६ । ३ । ७४ । इति नुडागमे रूपम् ( अनन्तः केशवे शेषे पुमान्निरवधौत्रिषु अनन्ता च विशल्यायां शीरवादूर्वयो रपि कणादुरालभा पथ्या-पार्वत्यामलकीषु च विश्वम्भरागुडूच्योः स्यादनन्तसुरवर्त्मनि ) इति मेदिनी अमति गच्छति कालमर्यादा मिति अमगत्यादिषु, इति धातोः ( उणादयोबहुलमिति बाहुलकात्तन् प्रत्यये ( तितुत्र तथ ) । ३ । २ । ६ । इत्यादिनेड्निषेधे मस्यानुस्वारेपरसवर्णे रूपम् यद्वा अन्ततीति अति बन्धने इति धातोः पचादेराकृतिगणत्वादच् प्रत्ययेऽन्त इति ( अन्त स्वरूपे निकटे प्रान्ते निश्चयनाशयोः ) अवयवेऽपि इति हैमचन्द्रः तथा यादसाम् जलजन्तूनाम् मध्ये यान्तीति या प्रापणे इति धातो रौणादिके ( सर्वधातुभ्योऽसुन् ) ४ । १८६ । इत्यसुन् प्रत्यये बाहुलकाद्दुगा गमे यादांसि यद्वा यानमितिया धातोः ( सम्पदादेराकृतिगणत्वाद् भावे यातीति कर्तरि वा क्विप्च ) ३ । २ । ७६ । इति क्विप् प्रत्यये या तामदन्तीति अद भक्षणे इतिधातो रसुन् प्रत्यये रूपम् यां दस्यन्तीति दैवादिका दुपक्षयार्थाद् दसु धातोः क्विप् प्रत्यये रूपम् ( यादांसिजलजन्तवः ) इत्यमरः तेषाम् पूर्ववत् षष्ठी वरुणोऽस्मि वृणोतीति वृञ् वरणे इति धातो रौणादिके ( कृवृदारिभ्य उनन् ) । ३ । ५३ । इत्युनन्प्रत्यये तस्यार्धधातुकत्वेन तन्निमित्तके गुणेरपरेणत्वे रूपम् ( वरुण-स्तरुभेदेप्सु प्रतीचीपतिसूर्ययोः ) इति विश्वः पितॄणाम् पान्ति रक्षन्ति गोत्रं सन्तुष्ठा इति पारक्षणे इति धातो रौणादिके ( नप्तृनेष्ट ) २ । ९५ । इत्यादिना तृनितृचि वा प्रत्यये निपातना दाकारस्येत्वे पितर स्तेषाम् अर्यमास्मि इयर्तीति ऋगता विति धातो रौणादिके श्वन्नुक्षन् पूषन् प्लीहन् क्लेदन् स्पेहन् मूर्द्धन् मज्जन् अर्यमन् धिश्वप्सन् परिज्मन् मातरिश्वन् मघवन् ) १ । १५९ । इति निपातनात् कनिन् प्रत्यये गुणे यमुडागमे च रूपम् यद्वा अर्यम् स्वामिनं अर्थात् तत्तत्कार्यस्य कर्तारम् मिमीते इति माङ् माने धातोः कनिन् प्रत्यये रूपमव-धेयम् । ( अर्यमातु पुमान् सूर्ये पितृदेवान्तरेऽपिच ) इति मेदिनी संयमताम् संयच्छन्तीति सम्पू-र्वात् यम उपरमे इति धातोः लटः स्थाने ( लटः शतृशानचावप्रथमासमानाधिकरणे ) । ३ । २ । १२४ । इति शतृ प्रत्यये शित्वात् ( सार्वधातुकत्वेन शपि आर्षत्वात ) इषु गमियमां छः ) ।

७।३। इति प्राप्तस्य छत्वस्य निषेधे संयमन्त स्तेषाम् यद्वा संयमनमिति, (यमः समुपनिविषु च) ३।३।६३। इति वैभाषिकेऽप् प्रत्यये संयमः अर्थात् दुष्टनिग्रहशिष्टानुग्रहादिरूपोराजधर्मस्तं संयमं पूर्वोक्त प्रकार मतन्ति निरन्तरं गच्छन्तीति अत सातत्यगमने इति धातोः (क्विप् च) ३।२।७६। इति क्विप् प्रत्यये शकन्ध्वादेराकृतिगणत्वात् पररूपे संयमत स्तेषाम् अर्थाद् धर्माधर्मफलदानेनानुग्रह निग्रहं च समाचरतां प्रभूणां मध्ये ऽहं यमो धर्मराजोऽस्मि यमयतीति स्वार्थणिजन्तात् कर्तरि पचाद्यचि णेर्लोपे रूपम् (यमो दण्डधरे ध्वाङ्क्षे संयमे यमजेऽपिच) इति विश्वः ॥ २६ ॥

**प्रह्लाद श्चास्मि दैत्यानां कालः कलयतामहम् ॥**
**मृगाणां च मृगेन्द्रोऽहं वैनतेयश्च पक्षिणाम् ॥ ३० ॥**

अहम् परमेश्वरः स्वविभूत्या दैत्यानामसुराणाम् मध्ये दितेरपत्यानीति दिति शब्दात् (दित्यदित्यादित्यपत्युत्तरपदाण्ण्यः) ।४।१।८५। इतिण्य प्रत्यये णित्वात् (तद्धितेष्वचामादेः) ।७।२।११७। इत्याद्यचो वृद्धौ यचिभम् )१ ।४।१८। इति भ संज्ञायाम् (यस्येतिच) ६।४।१४८ इतीकारलोपे दैत्यास्तेषाम् षष्ठी पूर्ववत् दीयते खराड्यते सदाचारादिरनयेति दो अवखंडने इति धातोर्बाहुलकात् कर्मणि (स्त्रियांक्तिन) ३।३।९४। इति क्तिन् प्रत्यये धातोरेच आत्वे (दाधाध्वदाप्) १।१।२०। इति घु संज्ञायाम् (घुमास्थागा) ६।४।६६। इतीत्वं प्रबाध्य (द्यतिस्यति मास्थामित्ति किति) ७।४।४०। इत्याकारस्येत्वे दितिः दनुजजननी कश्यपभार्या प्रह्लादोऽस्मि प्रह्लादयति सत्पुरुषानिति प्रपूर्वात् प्रयोजकणिजन्तात् सुखार्थात् ह्लादी धातोः कर्तरि पचाद्यचिणेर्लोपे रूपम् अर्थाद् दितिवंश्योऽपि परमसात्विकत्वेनान्वर्थसंज्ञः इति भावः) कलयतां सख्यानं गुणन विदधताम् कलयन्ति गमयन्ति संख्यानं वा कुर्वन्तोति चौरादिकात कलगतौ संख्याने च इति धातोः (सत्यापपाश रूप वीणातूल) ३।१।२५। इत्यादिना स्वार्थेणिचि तस्यार्धधातुकत्वेन (अतोलोपः) ६।४।४८। इत्यकारलोपे (अचः परस्मिन् पूर्वविधौ) १।१।५७। इत्यल्लोपस्य स्थानिवद् भावेन (अत उपधायाः) ७।२।११६। इति प्राप्तोपधावृद्धिनिषेधे कलीत्यस्य (सनाद्यन्ता धातवः) ३।१।३२। इति धातुत्वात् लटः स्थाने (लटः शतृशानचौ) ३।२।१२४। इत्यादिना शतृ प्रत्यये तस्य शित्वात् सार्वधातुकत्वेन शपि गुणेऽयादेशे कलयन्त स्तेषाम् पूर्ववत् षष्ठी कालोऽस्मि कोलयति उपदेशयतीति वेल कालोपदेशे इत्यत्र काल इति पृथगेव धातुरित्येके इति काल धातोः स्वार्थे णिच्यल्लोपे ततः कर्तरि पचादेराकृतिगणत्वा दचि णेर्लोपे रूपम् (कालो मृत्यौ महाकाले समये यमकृष्णयोः) इति मेदिनी मृगाणाम् मृग्यन्ते अन्वेष्यन्ते व्याधै रिति चुरादावदन्तेषु पठितात् मृग अन्वेषणे इति धातोः (अकर्तरि च कारके संज्ञायाम्) ३।३।१९। इति-घञ् प्रत्यये णेर्लोपे मृगा स्तेषाम् मध्ये (मृगः पशौ कुरंगे चकरि नक्षत्र भेदयोः अन्वेषणायां मृगी तु वनितान्तरे) इति विश्वः

मेदिन्यौ मृगेन्द्रोऽस्मि मृगाणां वन्य पशूना मिन्द्रः स्वामी अति वलिष्ठत्वात् स्वस्वामिसंवन्धे षष्ठी ( षष्ठी ) इति समासे रूपम् प्रकृते मृगशब्दस्य वन्यपशुसूकरादीनां सर्वेषा मेवोपलक्षकत्व मवसेयम् ( सिंहोमृगेन्द्रः पञ्चास्यः ) इत्यमरः इन्दतीति इदि परमैश्वर्ये इति धातोः ( ऋज्रे-न्द्राग्रे त्यादिना रन् प्रत्यये रूपम् पक्षिणाम् मध्ये पक्षोगरुत् नित्यं विद्यते येषामिति ( अति इनि ठनौ ) ५ । २ । ११५ । इतीनि प्रत्यये भत्वादकार लोपे पक्षिणस्तेषाम् पूर्ववत् षष्ठी पक्षयतीति पक्षपरिग्रहे इति धातोः पचाद्यचि पद्यते इति ( अकर्तरि च ) ३ । ३ । १६ । इति घञ् प्रत्यये आर्धधातुकत्वाण् णेर्लोपे पक्षः ( गरुत् पक्षच्छदाः पत्रं पतत्रंच तनूरुहम् ) इत्यमरः ( पक्षः पार्श्व-गरुत् साध्य सहाय वलभित्तिषु ) इति वैजयन्ती ) पक्षस्तु मासार्धे गृहसाध्ययोः चुल्लीरंध्रे वले पार्श्वे वर्गे केशात् परश्चयेपिच्छे विरोधे देहाङ्गे सहाये राजकुञ्जरे, इति मूर्धन्य षान्तेषु हैमः वैनते-योऽस्मि विनताया अपत्यमिति विनता शब्दात् ( स्त्रीभ्योढक् ) ४ । १ । १२० । इति ढक् प्रत्यये ( आयनं यीनीयियः ) ७ । १ । २ । इत्यादिना ढस्यैयादेशे कित्वादाद्यचो वृद्धौ भत्वादाकारलोपे रूपम् ( वैनतेयस्तु गरुडेस्यात् प्रभाकरसारथौ ) इति कोशान्तरम् विभिः पतत्रिभिर्नता स्तुतेति ( कर्तृकरणे कृताबहुलम् ) २ । १ । ३२ । इति समासे विनता वान्तीति वा गति गन्धनयोरिति धातोः ( वातेर्डिच्च ) । उ० । ४ । १३४ । इतीण् प्रत्यये डित्वाट्टेर्लोपे वयः " विविस्करपतत्रयः " इत्यमरः णम् प्रह्वत्वे शब्दे चेति धातोः कर्मणि ( निष्ठा ) ३ । २ । १०२ । इति क्त प्रत्यये तस्य-कित्वेन ( अनुदात्तोपदेश वनति ) ६ । ४ । ३७ । इत्यादिना मकारलोपे स्त्रीत्वात् टापि दीर्घे नतेति रूपम् ॥ ३० ॥

**पवनः पवतामस्मि रामः शस्त्रभृतामहम्॥**
**झषाणां मकरश्चास्मि स्रोतसामस्मि जाह्नवी ॥ ३१ ॥**

अहं परमेश्वरः पवतां मध्ये पवनोऽस्मि तथा शस्त्रभृतां मध्ये रामः च पुनः झषाणां मध्ये मकरोऽस्मि तथा स्रोतसां मध्ये जाह्नव्यस्मीत्यन्वयः ॥ ३१ ॥

पवताम् पवन्तीति पूङ् पवने इति धातो रार्षत्वाल्लटः शतृ प्रत्यये शित्वात् सार्वधातु-कत्वेन शपि गुणावादेशयोः पवन्त स्तेषाम् पूञ् पवने इति धातोः शतृप्रत्यये आर्षत्वात्श्नाभावे शपि वा रूपम् यद्वा पवन मिति पवनार्थात् पूङ् धातोः पूञ् धातोर्वा ( ऋदोरप् ) ३ । ३ । ५७ । इत्यप् प्रत्यये गुणावादेशयोः पवस्तम् अतन्तीति सातत्य गमनार्था दतधातोः क्विप् प्रत्यये शकन्ध्वा-दित्वात् पररूपे पवत स्तेषाम् अर्थात् पवित्रतां विदधतां वेगवताम् पवनोऽस्मि पुनातीति पूञ् पवने इति धातोः ( बहुलमन्यत्रापि ) । उ० । २ । ७८ । इति युच् प्रत्यये ( युवोरनाकौ ) ७ । १ । १ । इत्यनादेशे गुणावादेशयोः पवनः, नभस्वद्वात पवन इत्यमरः, शस्त्रभृताम् शस्त्र मायुध बिभ्रतीति ( क्विप् च ) ३ । २ । ७६ ॥ इति क्विप् प्रत्यये तस्य कित्वाद् गुणनिषेधे पित्वात् (ह्रस्व-

स्य पिति कृति तुक् ) ६ । १ । ७१ । इति तुगागमे शस्त्रभृतस्तेषाम् शसत्यनेनेति शसुहिंसाया मिति धातोः ( दाम्नीशस युयुज स्तुतुदसिसिच मिहपत दशनहः करणे ) ३ । २ । १८२ । इति ष्ट्रन् प्रत्यये ( षः प्रत्ययस्य ) इतीत्वाल्लोपे ( तितुत्रतथ ) ७ । २ । ६ । इत्यादिनेड् निषेधे रूपम् ( शस्त्रमायुधलोहयोः ) इत्यमरः ( शस्त्रं लोहास्त्रयोः क्लीवं च्छुरिकायां तुयोषिति ) इति मेदिनी रामोस्मि रमन्ते यस्मित् येनवेति रमुक्रीडायामिति धातोः ( हलश्च ) ३ । ३ । १२१ । इति घञ् प्रत्यये उपधा वृद्धौ रूपम् ( रामायोषाहिङ्गुलिन्यो क्लीवं वास्तुक कुष्ठयोः नाराघवे च वरुणे रेणुकेयेहलायुधे हये च पशु मेदे च त्रिषु चारौ सितेऽसिते ) इति मेदिनी अर्थात् शस्त्रास्त्र संचालन चणानाम् मध्ये दाशरथिरहमस्मीति भावः झषाणाम् अर्थात् जलचरजातिसामान्यानाम् मध्ये झषन्तीति झषहिंसाया मिति धातोः पचाद्यचि झष्यन्ते इति ( खनोघ च ) ३ । ३ । १२५ । इत्यत्र धित् करणात् अन्यतोऽपि घ प्रत्यये झषाः ( झषानागबलायां स्त्री तापमत्स्याटवीषुना ) इति कोशान्तरम् ( पृथुरोमा झषो मत्स्यः ) इत्यमरः मकरोऽस्मि अर्थात् जलजन्तु जातेषु अति वलिष्ठ स्तत् संज्ञकोऽस्मि मङ्कतीति मकिभूषायामिति धातोः पचाद्यचि ( आनिलोट् ) ८ । ४ । १६ । इत्यत्राकारोच्चारण ज्ञापितया ( आगम शास्त्र मनित्यम् ) प० इति इदित्वप्रयुक्तनुमभावे मकस्तं रातीति रादाने इति धातोः ( आतोऽनुपसर्गेकः ) ३ । २ । ३ । इति कप्रत्यये आकारलोपे मकरः स्रोतसाम् स्रवन्तीति स्रु गताविति धातोः ( स्रुरीभ्यां तुट् च ) उ० । ४ । २०२ । इत्यसुन् प्रत्यये गुणे तुडागमे च स्रोतांसि निम्नगारयाः ( स्रोत इन्द्रिये निम्नगारये ) इत्यमरः ( स्रोतोऽम्बु वेग इन्द्रिये ) इति मेदिनी तेषाम् पूर्ववत् षष्ठी जाह्नवी जह्नो राजर्षे रपत्यं स्त्रीति जह्नु शब्दात् ( तस्यापत्यम् ) ४ । १ । ९२ । ) इत्यण् प्रत्यये आद्यचो वृद्धौ भत्वात् ( ओर्गुणः ) ६ । ४ । १४६ । इति गुणेऽवादेशे स्त्रीत्वात् ( टिड्ढाणञ् ) ४ । १ । १५ । इति ङीपि भत्वादकार लोपे जाह्नवी जहुतनयास्मीति जहाति दुरितानीति ओहाक् त्यागे इति धातोः ( जहातेर्द्वे ऽन्तलोपश्च ) । उ० । इति नु प्रत्यये धातोर्द्वित्वे ऽभ्यास कार्येऽन्तलोपे जह्नुः ( जह्नुःस्यात् पुंसिराजर्षि मेदे च मधुसूदने ) इति मेदिनी ॥ ३१ ॥

**सर्गाणामादिरन्तश्च मध्यं चैवाहमर्जुन ॥**
**अध्यात्मविद्या विद्यानां वादः प्रवदतामहम् ॥ ३२ ॥**

भो अर्जुन अहं सर्गाणामादिः प्रथमः अन्तोऽवसानम् मध्यं चैवास्मि तथा विद्यानां मध्यात्मविद्यास्मि प्रवदतां वादोऽस्मीत्यन्वयः ॥ ३२ ॥

भो अर्जुन अहं परमेश्वरः सर्गाणाम् सृज्यन्ते इति सर्जनानिवेति सृज विसर्गे इति धातोः ( अकर्तरि च ) ३ । ३ । १९ । इति ( भावे ) ३ । ३ । १८ । इति वा घञ् प्रत्यये लघूपधगुणे चजोरितिकुत्वे सर्गास्तेषाम् सम्बन्ध सामान्ये षष्ठी ( सर्गः स्वभाव निर्मोच निश्चया-

ध्याय सृष्टिषु ) इत्यमरः ( सर्गस्तु निश्चयाध्यायमोहोत्साहात्मसृष्टिषु ) इति मेदिनी अर्थात् सृष्टीनाम् आदिः आदीयते इति * रूपम् ( पुंस्यादिः पूर्वं पौरस्त्य प्रथमाद्याः ) इत्यमरः अन्तो-नाशः अन्तनमिति अति बन्धने इति धातोः ( हलश्च ) ३ । ३ । १८ । इति घञ् प्रत्यये अन्ततीति पचाद्यचि वा रूपम् ( अन्तः स्वरूपे निकटे प्रान्ते निश्चय नाशयोः अवयवेऽपीति ) हेमचन्द्रः मध्यम् महतीति महपूजायामिति धातो रौणादिके ( अध्न्यादयश्च ) ४ । ।११२ । इति यकि पृषोदरा-दित्वात् ह्रस्य धकारे रूपम् तथा विद्यानां विदन्त्यर्थम् याभिरिति विद्ज्ञाने इति धातोः ( संज्ञायां समजनिषद निपतमनविद ) । ३ । ३ । ९९ । इत्यादिना क्यप् प्रत्यये कित्वाद् गुणनिषेधे विद्या स्तासां मध्ये अध्यात्मविद्यास्मीति आत्मनीति ( अव्ययं विभक्ति समीप ) २ । १ । ६ । इत्यादिना विभक्त्यर्थेऽव्ययीभावे समासे ( प्रथमानिर्दिष्टं समास उपसर्जनम् ) १ । २ । ४३ । इत्यधीत्य-स्योपसर्जनत्वात् ( उपसर्जनं पूर्वम् ) २ । २ । ३० । इति पूर्वं निपाते ( अनश्च ) ५ । ४ । १०८ । इति समासान्ते टचि ( यचिभम् ) १ । ४ । १८ । इति भसंज्ञायाम् ( नस्तद्धिते । ६ । ४ । १४४ । इति टेर्लोपे अध्यात्मम् तत्र या विद्यातदेव या विद्येति सप्तमीति योगविभागात् कर्मधारये वा समासे रूपम् अर्थात् परमात्मविषयकज्ञानरूपोऽस्मीति भावः अततीति अत धातोः ( सातिभ्यां मनिन् मनिणौ ) । उ० । ४ । १५३ । इति मनिण् प्रत्यये उपधा वृद्धौ आत्मेति ( आत्मा कलेवरे यत्ने स्वभावे परमात्मनि चित्ते धृतौ च बुद्धौ च परव्यावर्तनेऽपि च ) इति धरणिः प्रवदतां प्रकर्षेण वदन्तीति प्रोपसृष्टात् वदव्यक्तायां वाचीति धातोः लटः स्थाने ( लटः शतृ शानचौ ) ३ । २ । १२४ । इति शतृ प्रत्यये तस्य सार्वधातुकत्वाच्छपि पररूपे प्रवदन्त स्तेषाम् ( कर्तृक-र्मणोः कृतिः ) । २ । ३ । ६५ । इति कर्तरि षष्ठी वादोऽस्मि वदनमिति वदधातोः ( भावे ) ३ । ३ । १८ । इति घञ् प्रत्यये उपधा वृद्धौ वादः अर्थात् सिद्धान्त कथन स्वरूपो ऽहमिति भावः॥३२॥

**अक्षराणा मकारोऽस्मि द्वन्द्वः सामासिकस्य च ॥**
**अहमेवाक्षयः कालो धाताहं विश्वतो मुखः ॥ ३३ ॥**

अहम् अक्षराणाम् मध्ये अकारोऽस्मि तथा समासिकस्य द्वन्द्वश्च अहमेव अक्षयः कालोऽस्मि तथा विश्वतो मुखः धाता हमेवास्मीत्यन्वयः ॥ ३३ ॥

अहं परमात्मा अक्षराणाम् नक्षरन्तीति अक्षराणि × ( मोक्षेऽपवर्गे ओं ब्रह्मण्यच्युते-ऽक्षरम् ) इत्यनेकार्थ कोशः ( अक्षरं तु मोक्षेपीत्यमरः अर्थाद् वर्णानां मध्ये वासुदेव वाचकत्वेन श्रेष्ठत्वादकारोऽस्मीति अकारो वैसर्वा वाक् सैवा स्पर्शोष्मभिर्व्यज्यमाना बह्वी नाना रूपा भव-तीति श्रुतिः अततीति अत सातत्यगमने धातो रौणादिके ड प्रत्यये टेर्लोपे अ इति ततः वर्णात् कारः ) ३ । ३ । १०८ । इतिकार प्रत्यये रूपम् सामासिकस्य समासानामव्ययीभाव तत्पुरुष

* व्याख्यातम् २ । × व्याख्यातम् २१ ।

प्रभृतीनां समूह इति समास शब्दात् ( अचित्त हस्ति धेनोष्ठक् ) ४ । २ । ४७ । इति ठक् प्रत्यये ( ठस्येकः ) ७ । ३ । ५० । इतीकादेशे किस्वादाद्यचो वृद्धौ भत्वादकारलोपे सामासिकस्तस्य मध्ये द्वन्द्वोऽहमस्मि यतस्तस्योभयपदार्थप्रधानत्वेन श्रेष्ठत्व मिति भावः समसनमिति संपूर्वाद् असु क्षेपणे इति धातोः असगतिदीप्त्यादानेषु इति धातोर्वा ( भावे ) ३ । ३ । १८ । इति घञ् प्रत्यये उपधा वृद्धौ समास इति ( द्वन्द्वं रहस्य मर्यादा वचन व्युत्क्रमण यज्ञपात्र प्रयोगाभिव्यक्तिषु ) ८ । १ । १५ । इत्यत्र द्वन्द्व इति योग विभागादन्यत्रापि क्वचित् द्वौ इति द्विशब्दस्य द्वित्वे पूर्वं पदस्याम् भावे आर्षत्वात् पुंस्त्वे द्वन्द्व इति यद्वा आसनमिति आसु उपवेशने इतिधातोः ( गुरोश्चहलः ) । ३ । ३ । १०३ । इति स्त्रीत्वे भावेऽकार प्रत्यये ततष्टापि सवर्णे दीर्घे आसातत्व विचारायविदुषाम् गुरु शिष्याणां चोपवेशना सैवेति ( सर्वप्रातिपदिकेभ्यः स्वार्थेकन् ) इति वा० कन् प्रत्यये ( केणः ) ७ । ४ । १३ । इति ह्रस्वे टापि ( प्रत्ययस्थात् कात् पूर्वस्यात इदाप्यसुपः ) ७ । ३ । ४४ । इत्याकारस्येत्वे आसिका सा समासदृशी एकत्रेति यस्मिन्निति बहुब्रीहि समासे ( सप्तमी विशेषणे बहुब्रीहौ ) २ । ३ । ३५ इति समेत्यस्य पूर्वं प्रयोगे ( स्त्रियाः पुंवत् ) ६ । ३ । ३४ । इति पुंवद्भावे ( गोस्त्रियोरिति ह्रस्वे ) समासिकः स एवेत्ति प्रज्ञादेराकृति गणत्वात् स्वार्थेऽणि आद्यचो वृद्धौ भत्वादकारलोपे सामासिकस्तस्य यद्वा आसनम् असनम् वा आसः आस धातोः गत्यर्थादस् धातोश्च ( भावे ) ३ । ३ । १८ । इति घञ् प्रत्यये रूपम् समानां साधूनां माम इति षष्ठीति समासे समस्तुस्यश्चासा वासः इति कर्मधारये समम् सहैवास उपवेशन मिति पृषोदरादित्वान् मकारलोपे समासः ततः ( तत्र विदित इति च ) ५ । १ । ४३ । इत्यार्हीये ठक् प्रत्यये किस्वादाद्यचो वृद्धौ ( ठस्येकः ) ७ । ३ । ५० । इतीकादेशे भत्वादकारलोपे सामासिकस्तस्य अर्थात् साधुजनोपवेशनसामयिक वाग् जालस्य विदुषामिति शेषः गुरुशिष्याणाम् वा सहैवावस्थिति संभूतस्य विचार विशेषस्य वा समतीति षमवैक्लव्ये इति धातोः पचाद्यचि समः ( समा संवत्सरे स्त्रियाम् सर्वसाधु समानेषु समंस्या दभिधेयवत् ) इति विश्वः ( सार्धन्तु साकं सत्रा समसह ) इत्यमरः द्वन्द्वोऽस्मि अर्थात् द्वन्द्वं रहस्यं गोपनीयं विद्यते यस्मिन्निति द्वन्द्व शब्दात् मत्वर्थीये ( अर्श आदिभ्योऽच् ) इत्यच् प्रत्यये भत्वादकारलोपे द्वन्द्वः अर्थादैकान्तिकस्तत्वविचारो ऽहमिति यावत् तथाहंपरमेश्वर एव अर्थान्नान्यः कश्चन इति अवधारणार्थ कैवशब्देन ध्वन्यते अक्षयः क्षयनमिति क्षिक्षये क्षिनिवासगत्यो रितिवा धातोः ( एरच् ) ३ । ३ । ५६ । इत्यच् प्रत्यये गुणायादेशयोः क्षयोनिवासो नाशोवा सोऽविद्यमानो यस्येति ( नञोऽस्त्यर्थानां वाच्यो वाचोत्तरपदलोपः ) वा० इति बहुब्रीहिसमासे न लोपे रूपम् यद्वा न क्षयतीति पचाद्यचि न क्षीयते इति दिवादेराकृति गणत्वेन हिंसार्थात् क्षी धातो रुक्त प्रत्यये गुणायादेशयोर्नञोनस्य लोपे च रूपम् ( निलयापचयौ क्षयौ ) इतममरः ( क्षयो रोगान्तरे वेश्म कल्पान्तापचयेषु च ) इति मेदिनी * कालः महाकालोऽस्मि ( कालो मृत्यौ महाकाले समये यम कृष्णयोः )

* व्याख्यातम् ।

इति मेदिनी तथाहं विश्वतो मुखः विश्वस्मिन् इति विश्वमिति वेतिविश्व शब्दात् ( आद्यादिभ्य उपसंख्यानाम् ) वा० । ५ । ४ । ४४ । इति आद्यादेराकृतिगणत्वात् तसि प्रत्यये ( तद्धितश्चासर्व विभक्तिः ) । १ । १ । ३८ । इति अव्ययत्वम् विश्वतो मुखमाननं यस्य स इति बहुव्रीहि समासे विश्वतोमुखः विशतीति विश प्रवेशने इति धातोः ( अशू प्रुषिलटि कणि खटि विशिभ्यः कन् ) । उ० । १ । १५२ । इति कन्प्रत्यये क्त्वाद् गुण निषेधे विश्वमिति ( विश्वं कृत्स्ने च भुवन विश्वेदेवेषु नागरं विश्वाप्यति विषायां स्यात् ) इति विश्वः खन्यतेऽनेनेति * मुखम् ) आनन लपनं मुखम् मित्यमरःधाता विधातास्मीति दधातीति धारणपोषणार्थाद् धाञ् धातोः ताच्छील्याद्यर्थे (तृन्)३ । २ । १३५ । इति तृन् प्रत्यये ततः प्रातिपदिकत्वात् प्रथमैकत्वे सौ ( ऋदुशनस्पुरुदंसोऽनेहसां च ) ७ । १ । ६४ । इत्यनङादेशे ( अप् तृन् तृच् ) ६ । ४ । ११ । इत्युपधा दीर्घे अपृक्तत्वात् सोर्लोपे न लोपे रूपम् ॥ ३३ ॥

**मृत्युः सर्वहरश्चाहं मुद्भवश्च भविष्यताम् ॥**
**कीर्तिः श्रीर्वाक् च नारीणां स्मृतिर्मेधा धृतिः क्षमा ॥ ३४ ॥**

अहं परमेश्वरः सर्वहरो मृत्यु रस्मि तथा भविष्यता मुद्भवोऽस्मि नारीणां च कीर्तिः श्रीः वाक् स्मृतिः मेधा धृतिः क्षमा स्मीत्यन्वयः ॥ ३४ ॥

सर्वहरः सर्वं निखिलं चराचरं हरति नाशयति प्रापयतीति हृञ् हरणे इति धातोः ( हरतेरनुद्यमनेऽच् ) ३ । २ । ६ । इत्यच् प्रत्ययेतस्यार्धधातुकत्वात् गुणेरपरे उपपद समासे रूपम् यद्वा हरणं मिति ( ऋदो रप् ) । ३ । ३ । ५७ । इत्यप् प्रत्यये हर इति पचाद्यचि वा रूपम् ( हरो नाशक रुद्रयोः वैश्वानरेऽपि च ) इति कोशान्तरम् सर्वस्य हर इति षष्ठीति समासे रूपम् सर्वतीति गतिहिंसार्थात् सर्व धातोः पचाद्यचि रूपम् ( अथ समं सर्वं विश्वमशेषंकृत्स्नम् ) इत्यमरः मृत्युरस्मि मरणमिति मृङ् प्राणत्यागे इति धातो रौणादिके ( भुजिमृङ्भ्यां युक्त्युकौ ) ३ । २१ । इतित्युक् प्रत्यये कित्वाद् गुणनिषेधे रूपम् ( मृत्युर्नामरणेयमे ) इति मेदिनी भविष्यताम् भविष्यन्तीति भू धातोः ( तौसत् ) ३ । २ ।१२७ । इति सत् सञ्ज्ञके ( लृटः सद्वा ) ३ । ३ । १४ । इति शतृ प्रत्यये ( स्यतासी लृलुटोः ) । ३ । १ । ३३ । इतिस्य प्रत्यये तस्यार्धधातुकत्वेनेडागमे गुणावादेशषत्वेषु भविष्यन्त स्तेषाम् कर्तरि षष्ठी उद्भवः उद्भवन मिति उत् पूर्वाद् भू धातोर्भावे ( ऋदोरप् ) ३ । ३ । ५७ । इत्यप् प्रत्यये गुणावादेशयोः रूपम् अर्थाद्भावि कल्याणानां य उद्भव उत्कर्ष हेतुः स चाहं मेवास्मीति भावः ( जनिरुत्पत्ति रुद्भवः ) इत्यमरः तथा नारीणाम् नृत्व नरत्व वा जाति विशिष्टाः स्त्रिय इति नृ शब्दात् नरशब्दाद् वा ( नृनरयोर्वृद्धिश्च ) इति शार्ङ्गर

---

* व्याख्यात्तम् २४ ।

वादि गण पाठात् ( शार्ङ्गरवाद्यञोङीन् ) ४ । १ । ७३ । इति ङीन् प्रत्यये वृद्धौ नार्यस्तासाम् कर्तरि कर्मणि सम्बधेवा षष्ठी नयति पूर्वं पुरुषान् उत्तमां गति मिति णीञ् प्रापणे इति धातो रौणादिके ( नयतेर्डिच ) २ । १०० । इति ऋन् प्रत्यये तस्य डित्वाट्टिलोपे ना इति नरति नृणाति वेति नृ नये इति धातोः पचादेराकृति गणादच् प्रत्यये गुणेरपरे नर इति कीर्तिः कीर्त्यते इति कीर्तनं वेति स्वार्थणिजन्तात् संशब्दनार्थात् कीर्ति धातोः ( ऊति यूति जूति साति हेति कीर्तयश्च । ३ । ३ । ९७ । इति निपातनाद् रूपम् ( कीर्तिः प्रसादयशसोः विस्तारे कर्दमेपिच ) इति कोशान्तरम् श्रीः श्रीयते सर्वै रिति श्रिञ् सेवायाम् इति धातो रौणादिके ( क्विन् वचि ) २ । ५७ इत्यादिना क्विप् प्रत्यये धातोर्दीर्घे श्रीः ( श्रीर्वेशरचना शोभा भारती सरल द्रुमे लक्ष्म्यां त्रिवर्ग सम्पत्तौ वेशोपकरणे मतौ ) इति विश्वमेदिन्यौ उच्यते इति वच् धातो रौणादिके क्विपि सम्प्रसारण भावे दीर्घे वाक् इति ( वाग्वाचे भारत्यां वचने स्त्रियौ ) इति कोशान्तरम् स्मरण मिति स्मृचिन्ताया मिति धातोः ( स्त्रियांक्तिन् ) ३ । ३ । ९४ । इति क्तिन् प्रत्यये गुणनिषेधे रूपम् स्मरणशक्ति रिति यावत् मेधते संगच्छते सर्वं यस्यामिति मेधृसंगमे इति धातोः ( गुरोश्च हलः ) ३ । ३ । १०३ । इत्यकार प्रत्यये टापि दीर्घे मेधेति ( धीर्धारणावती मेधा इत्यमरः मेधा बुद्धौ क्रतौ पुमान् ) इति कोशान्तरम् अर्थात् तत्कर्तृकधारणाशक्तिरिति यावत् धरणमिति ध्रियते वेति धृञ् धारणे इति धातोः ( स्त्रियां क्तिन् ) ३ । ३ । ९४ । इति क्तिन् प्रत्यये रूपम् ( धृतिर्योगान्तरे धैर्ये धारणा ध्वर तुष्टिषु ) इति विश्वः अर्थात् तत्कर्तृकातुष्टिः धैर्यम् वा क्षमते इति पचाद्यचि टापि क्षमा क्षम्यते इति ( अकर्तरिच ) । ३ । ३ । १९ । इति घञ् ( नोदात्तोपदेशस्य ७ । ३ । ३४ । इत्युपधावृद्धि निषेधे क्षमः क्षमणमिति क्षमूष् सहने इति धातोः ( षिद्भिदादिभ्योऽङ् ) ३ । ३ । १०४ । इत्यङ् प्रत्यये टापि रूपम ( क्षिति क्षान्त्योः क्षमा युक्ते क्षमं शक्ते हितेत्रिषु ) इत्यमरः ( क्षमातितिक्षा पृथ्वी च योग्ये शक्ते हितेक्षमम् ) इति धरणिः अर्थात् तत् कर्तृकातितिक्षा हमस्मीति भावः ॥ ३४ ॥

**बृहत्साम तथा साम्नाम् गायत्रीच्छन्दसामहम् ॥**
**मासानां मार्गशीर्षोऽह मृतूनां कुसुमाकरः ॥ ३५ ॥**

तथा अहं परमेश्वरः सम्नां मध्ये बृहत्सामास्मिच्छन्दसां गायत्र्यस्मि अहमेव मासानां मध्ये मार्गशीर्षस्तथा ऋतूनां कुसुमाकरोऽस्मीत्यन्वयः ॥ ३५ ॥

स्यन्ति नाशयन्ति पापानीति षोन्तकरणे इति धातोः ( अन्येभ्योऽपि दृश्यन्ते ) । ३ २ । ७५ । इति मनिन् प्रत्यये ( आदेच उपदेशेऽशिति ) ६ । १ । ४५ । इत्योकारस्यात्वे सामानि अर्थाद् धर्मनिबन्धना मोक्षोपाय भेदाः तेषाम् निर्धारणे षष्ठी ( सामक्वीव मुपायस्य भेदे वेदान्तरेऽपिच ) इति विश्वः बृहत्साम ( त्वामिद्धि हवामहे ) इत्यस्या मृचि गीति विशेषे सर्वेश्वरत्वे

नेन्द्रस्तुतिरूपमस्मि अर्थात् परमेश्वरस्तुतिगीतेः मोक्षोपायेषु सर्वश्रेष्ठत्वादिति भावः तथा च्छन्दसाम् चन्दन्तीति चदि आल्हादने दीप्तौ चेति धातो रौणादिके ( चन्देरादेश्च छः ) ४ । ११६ । इत्यसुन् प्रत्यये चकारस्य छकारे छन्दांसि तेषाम् ( च्छन्दः पद्ये च वेदे च स्वैराचाराभिलापयोः ) इति मेदिनी अर्थात् नियताक्षरपादरूपच्छन्दोविशिष्टानामृचां मध्ये गायत्री गायतीति गै शब्दे इति धातोः लटः शतृ प्रत्यये शपि गायन् तम् त्रायते इति त्रैङ् पालने इति धातोः (आतोऽनुपसर्गेकः ) ३ । २ । ३ इति क प्रत्यये तस्य कित्वादाकारलोपे उपपदसमासे गौरादित्वान् ङीषिरूपम् यद्वा गानं गायः गाङ् धातोः गै धातोर्वा ( भावे )३। ३।१८ । इति घञ् प्रत्यये ( आतो-युक् चिण् कृतोः ) ७ । ३ । ३३ । इति युगागमे रूपम् तेन गायेन गानेन ज्ञानेन वा त्रायते इति ( सुपिस्थः ) ३ । २ । ४ । इत्यत्र सुपीति योग विभागात् क प्रत्यये ङीष् प्रत्यये रूपम् ( गायत्री त्रिपदादेवी छन्दोभित् खदरेषु च ) इति मेदिनी अर्थाद् द्विजत्वादि हेतुभूतत्वेन तत्स्वरूपो ऽह-मेवास्मीति भावः मासानाम् मस्यन्ते परिमीयन्ते इति मसीपरिमाणे इति धातोः ( अकर्तरिचकारके संज्ञायाम् ) ३। ३।१६ । इति(भावे) ३।३।१८। इति वा घञ् प्रत्यये उपधा वृद्धौ मासाः तेषाम् अर्थात् शुक्लकृष्णेतिपक्षद्वयघटितसंज्ञाविशेषाणाम् मार्गशीर्षोऽहम् मृगशिरा नक्षत्रेण युक्ता पौर्णमासीति मृगशिरस् शब्दात् ( नक्षत्रेण युक्तः कालः ) ४ । २ । ३ । इत्यण् प्रत्यये आद्यचो वृद्धौ ( अचि शीर्ष ) ६ । १ । ६२ । इति शिरसः शीर्षादेशे ( टिड्ढाणञ् ) ४ । १ । १५ । इति ङीपि मार्ग-शीर्षी सा यस्मिन् मासे इति ( सास्मिन् पौर्णमासी ) ४ । २ । २१ । इत्यण् प्रत्यये भत्वादीकार-लोपे रूपम् आकृत्या मृगस्य शीर्ष मिव शीर्षं शिरोयस्येति बहुव्रीहि समासे मृगशीर्ष मिति ( मृगोऽपि मृगशीर्षे हस्ति जातौ मृगः पशु कुरङ्गयो ) इति व्याडिः अर्थात् मृगो मृगशीर्षं शिर इव प्रधानं प्रथमं यस्मिन्निति बहुव्रीहिसमासे मृगशीर्षम् तदेवेति ( प्रज्ञादिभ्यश्च ) ५ । ४ । ३८ । इत्यण् प्रत्यये आद्यचो वृद्धौ ( स्वर्थिकालिङ्ग वचनान्यति वर्तन्ते कचित् ) इति पुंस्त्वे मार्गशीर्ष इति वा ऋतूनाम् ऋच्छन्ति इति ऋगताविति धातोः ( अर्तेश्चतुः किच ) १ । ७२ । इत्यौणादिके तु प्रत्यये कित्वाद् गुणनिषेधे ऋतव स्तेषाम् मध्ये ( ऋतुर्मासि बसन्तादौ धीरेऽस्त्री कुसुमेऽपि च ) इति धरणिः कुसुमाकरो बसन्तोऽस्मि कुसुमानां प्रसूनानामाकरो यस्मिन्निति व्याधिकरणपद बहुव्रीहिसमासे रूपम् कुस्यन्तोति कुससंश्लेषणे इति धातो रौणादिके ( कुसेरुम्भेमेदेताः ) ४ । १०६ । इत्युम् प्रत्यये कुसुमाति ( संज्ञापूर्वकोविधिरनित्यः)इति गुण भावोऽवगन्तव्यः (कुसुमं स्त्री रजो नेत्र रोगयोः फल पुष्पयोः ) इति मेदिनी आक्रियते यस्मिन्निति आङ् पूर्वात् कृ धातोः ( ऋदोरप् ) ३ । ३ । ५७ । इत्यप् प्रत्यये गुणेरपरे आकरः यद्वा आकीर्यन्ते धातवोऽत्रेत्ति ( पुंसि संज्ञायां घः प्रायेण ) ३ । ३ । ११६ । इति कॄ विक्षेपे धातो र्घ प्रत्यये गुणेरपरे रूपम् " आकरो निकरे खनौ " इति कोशान्तरम् " खनिः स्त्रिया माकरः " इत्यमरः ॥ ३५ ॥

द्यूतं छलयतामस्मि तेज स्तेजस्विना महम् ॥
जयोऽस्मि व्यवसायोऽस्मि सत्वं सत्ववता महम् ॥ ३६ ॥

अहं छलयतां द्यूतमस्मि तेजस्विनां तेजोऽस्मि विजेतॄणांजयः व्यवसायिनां व्यवसायः सत्ववतां सत्वमस्मीत्यन्वयः ॥

छलयताम् छलं छद्म कुर्वन्तीति द्वितीयान्तात् छलशब्दात् ( तत्करोति तदाचष्टे ) वा० ( प्रातिपदिकाद्धात्वर्थे बहुलमिष्ठवच्च ) । वा० । इति णिच् प्रत्यये सनाद्यन्तेति धातुत्वात् ( सुपोधातु प्रातिपदिकयोः ) इति विभक्तेर्लुकि इष्ठवद्भावेन भत्वात् ( टेः ) । ६ । ४ ।१५५ । इति टिलोपे छलीति धातोः लट स्थाने ( लटः शतृशानचौ ) ३ । २ । १२४ । इत्यादिना शतृ प्रत्यये शित्वात् सार्वधातुकत्वेन शपि गुणायादेशयोः प्रथमा बहुत्वे छलयन्त स्तेषाम् छ्यतिमर्म मिति छो छेदने इति धातो रौणादिके ( वृषादिभ्यश्चित् ) १ । १०५ । इति कल प्रत्यये ( आदेच उपदेशोऽशिती) त्यात्वे ( आतोलोप इटिच ) । ६ । ४ । ६४ । इत्याकारलोपे छलम् " छलं छद्मस्खलितयोः " इति हैमः द्यूतमस्मि देवन मिति क्रीडाद्यर्थाद्दिवु धातोः ( नपुंसके भावेक्तः ) । ३ । ३ । ११४ । इति क्त प्रत्यये अस्य धातोरुदित्वेन क्त्वा प्रत्यये ( उदितोवा ) । ७ । २ । ५६ । इति वेट्त्वात् ( यस्य विभाषा ) इतीड् निषेधे किस्वाद् गुणनिषेधे ( छ्वोः शूडनुनासिके च ) । ६ । ४ । १९ । इति वकारस्योठि यणि द्यूतम् " द्यूतोऽस्त्रिया मक्षवती कैतवं पणः " इत्यमरः तेजस्विनाम् मध्ये तेजयति तेज्यतेऽनेनेति वा तिजनिशाने इति स्वार्थणिजन्तात् ( सर्वधातुभ्योऽसुन् ) । ४ । १८९ । इत्यौणादिके ऽसुन् प्रत्यये तस्यार्धधातुकत्वेन णेर्लोपे रूपम् " तेजः प्रभावे दीप्तौ च वलेशुक्रेऽपि " इत्यमरः " तेजो धाम्नि पराक्रमे प्रभावरेतसोश्च " इति विश्वः " तेजो दीप्तौ प्रभावे च स्यात् पराक्रमरेतसोः " इति मेदिनी तथा च " अधिक्षेपापमानादेः प्रयुक्तस्य परेण यत् प्राणात्ययेऽप्यसहनं तत् तेजः समुदाहृतम् " इति भरतः तद्विद्यते येषामिति तेजः शब्दात् ( अस्माया मेधास्रजोविनिः ) । ५ । २ । १२१ । इति विनि प्रत्यये तेजस्विन स्तेषाम् तेजः पराक्रमोऽस्मि जयो जेतॄणामिति शेषः जयनमिति जयार्थात् जिधातोः ( एरच् ) । ३ । ३ । ५६ । इत्यच् प्रत्यये गुणायादेशयो रूपम् " जयाजयन्तीतिथिभित् पथ्योमातत्सखीषु च अग्निमन्थे नाजयन्तेविजये च युधिष्ठिरे " इति मेदिनी व्यवसायोऽस्मि व्यवसायिना मिति शेषः व्यवसीयते इति व्यवपूर्वात् षोऽन्त कर्मणि धातोः ( अकर्तरिच कारके संज्ञायाम् ) । ३ । ३। १९ । इति घञ् प्रत्यये धातोरे च आत्वे ( आतोयुक् चिण् कृतोः ) । ७ । ३ । ३३ । इति युगागमे रूपम् तथा सत्ववतां बलवताम् सत्वं विद्यते येषामिति ( तदस्यास्त्य० ) ५ । २ । ९४ । इति मतुप् प्रत्यये ( मादुपधायाश्च ) । ८ । २ । ९ । इत्यादिना मस्यवत्वे सत्ववन्त स्तेषाम् मध्ये सीदति सद्यते वेति त्रिशरण गत्याद्यर्थात् पद्लृधातोः ( अन्येभ्योऽपि दृश्यन्ते ) । उ० । ४ । १०५ । इति त्वन् प्रत्यये चर्त्वेरूपम् " द्रव्यासु

व्यवसायेषु सत्वमस्त्रीतु जन्तुषु " इत्यमरः " सत्वं गुणे पिशाचादौ वले द्रव्यस्वभावयोः आत्मत्व व्यवसायासुवित्तेष्व स्त्रीतु जन्तुषु " इति मेदिनी ॥ ३६ ॥

**वृष्णीनां वासुदेवोऽस्मि पाण्डवानां धनञ्जयः ॥**
**मुनीनामप्यहं व्यासः कवीना मुशना कविः ॥ ३७ ॥**

अहम् वृष्णीनां वासुदेवः पाण्डवानां धनञ्जयः मुनीना मपि व्यासः कवीनां मध्ये उशना कवि रस्मीत्यन्वयः ॥ ३७ ॥

अह परमेश्वरः वृष्णीनाम् वर्षन्ति धर्मं वृष्यते धर्मोयैरितिवा वृषुसेचने धातोः ( सृवृषिभ्यां कित् ) उ० । ४ । ४९ । इति नि प्रत्यये तस्य कित्वाद् गुणनिषेधे णत्वे वृष्णयो यादवा स्तेषाम् " वृष्णिस्तु यादवं मेषे वृष्णिः पाखण्ड चण्डयोः " इति विश्वः वासुदेवोऽस्मि वसुदेवस्या पत्यमिति वसुदेव शब्दात् ( तस्यापत्यम् ) इत्यधिकारे ( ऋष्यन्धक वृष्णि कुरुभ्यश्च ) ।४।१।१४४। इत्यण् प्रत्यये आद्यचो वृद्धौ भत्वादकारलोपे रूपम् यद्वा वसति सर्वत्रान्तर्यामितयेति निवासार्थाद्वस् धातो रौणादिके बाहुलकात् उण् प्रत्यये उपधा वृद्धौ वासुः सचासौ देव इति कर्मधारय समासे रूपम् तथाच " सर्वत्रासौ समस्तंवा वसत्यत्रेति वैयतः ततोऽसौ वासुदेवेति विद्वद्भिः परिगीयते " इति विष्णु पुराण वचनतो बलरामस्यतदपत्येऽप्यग्रहणम् अर्थात् त्वत्प्रियसुहृदह मस्मीति भावः पाण्डवानाम् पाण्डोरपत्यानीति पाण्डु शब्दात् ( तस्या पत्यम् ) इत्यणि पाण्डवा युधिष्ठिरादय स्तेषाम् पण्डयते ज्ञायतेतत्वं येनेतिपडिगतौ पण्डयति नाशयत्यरीनिति पडिनाशने इति स्वार्थणिजन्तात् वा ( मृगय्वादयश्च ) । उ० । १ । ३७ । इति कुप्रत्यये ( पृषोदरादीनियथोपदिष्टम् ) । ६ । ३ । १०९ । इति दीर्घे रूपम् " पाण्डुः कुन्ती पतौसिते " इति हैमः धनञ्जयोऽर्जुनोऽस्मि धनं शत्रूणां वित्तं जयति समादत्ते इति जयार्थाद् जिधातोरभिभवार्थाद् जिधातोर्वा ( संज्ञायां भृतृवृजि ) । ३ । २ । ४६ । इत्यादिना खच् प्रत्यये तस्यार्धधातुकत्वात् गुणेऽयादेशे उपपद समासे ( अरुर्द्विषदजन्तस्यमुम् ) । ६ । ३ । ६७ । इति मुमागमे ऽनुस्वारे परसवर्णे रूपम् " धनञ्जयः सर्पभेदे कुब्जभेदेहमारुते ऽर्जुनेऽग्नौ " इति हैमः धनति दधन्ति वेति भ्वादेर्जुहोत्यादेर्वा धन धातोः पचाद्यचि रूपम् " धनन्तु गोधने वित्ते " इति विश्वः मुनीनाम् मन्यन्ते इति मनज्ञाने इतिधातोः ( मनेरुच ) । उ० । ४ । १२३ । इतीन् प्रत्यये धातोरकारस्योकारं मुनय स्तेषाम् वाचं यमानां मध्ये " वाचंयमो मुनिः " इत्यमरः " मुनिः पुंसि वशिष्ठादौ वङ्गसेनतरौजिने " इति मेदिनी अर्थात् सर्वतत्वाभिज्ञानवतानाम् व्यासोऽस्मि व्यस्यन्ते क्षिप्यन्ते दुरितानि व्यसनानिचयेनेति विपूर्वादसु क्षेपणे इति धातोः ( अकर्तरिच कारके संज्ञायाम् ) । ३ । ३ । १९ । इति घञ् प्रत्यये उपधा वृद्धौ उपसर्गस्ययणि रूपम् कवीनाम् कवन्ते गच्छन्तितत्व मिति कुङ् गताविति धातोः ( अच इः ) । उ० । ५ । १३९ । इती प्रत्यये गुणावादेशयोः कवय-

स्तेषाम् " कविर्वाल्मीकि काव्ययोः सूरौ काव्यकरे पुंसिस्यात् स्त्रजीनेतु योषिति " इति मेदिनी अर्थात् सूक्ष्मार्थविवेकिनाम् मध्ये उशना कविरस्मि वष्टीति वशकान्ता विनि धातोः ( वशेः कनसिः ) उ० । ४ । २३६ । इति कनस् प्रत्यये तस्यकित्त्वात् ( ग्रहिज्या० ) । ६ । १ । १६ । इत्यादिना वस्योकारे सम्प्रसारणे पूर्व रूपे प्रा० सौ ( ऋदुशनस् ) । ७ । १ । ९४ । इत्यादिना नङा देशे सर्वनाम स्थानेचासम्बुद्धा वित्युपधा दीर्घे स्रो लोपे नलोपे रूपम् ॥ ३७ ॥

**दण्डो दमयता मस्मि नीतिरस्मि जिगीषताम् ॥**
**मौनं चैवास्मि गुह्यानां ज्ञानं ज्ञानवता महम् ॥ ३८ ॥**

अहम् दमयतां दण्डोऽस्मि जिगीषतां नीतिरस्मि गुह्यानां मौनं चास्मि ज्ञानवतां चैव ज्ञान मस्मीत्यन्वयः ॥ ३८ ॥

अहं परमेश्वरः दमयताम् दमयन्तीति दमु उपशमे इति धातोः ( हेतुमतिच ) । ३ । १ । २६ । इति णिच्प्रत्यये उपधावृद्धौ ( जनीजृष्क्रसुरञ्जो मन्ताश्च ) वा० इत्यमन्तत्वेन मित्वात् ( मितां ह्रस्वः ) । ६ । ४ । ९२ । इत्युपधाह्रस्वे दमीत्यस्य ( सनाद्यन्ता ) इति धातुत्वाल् लटः ( लटः शतृ शानचौ ) । ३ । २ । १२४ । इत्यादिना शतृ प्रत्यये तस्यशित्वात् सार्वधातुकत्वेन शपि गुणायादेशयोः प्रथमाबहुत्वे दमयन्त स्तेषाम् अर्थाद् यथापराध मनुशासताम् कर्तरि षष्ठी दण्डोऽस्मि दण्ड्यतेऽनेन दण्डनं वेति दण्ड दण्डनिपातने धातोः ( पुंसि संज्ञायां घः प्रायेण ) । ३ । ४। ११८ । इति घ प्रत्यये ( भावे ) । ३ । ३ । १८ । इति घञ् प्रत्ययेवाणोर्लोपे रूपम् * " दण्डोयमे मानभेदे लगुडे दमसैन्ययोः व्यूहभेदे प्रकाण्डेऽश्वे कोणमन्थानयोरपि अभिमाने ग्रहे दण्डश्चण्डांशोः पारिपार्श्विके " इति विश्वः अर्थाद्दम इति भावः तथा जिगीषताम् जेतुमिच्छताम् जयार्थाज् जिधातोः ( धातोःकर्मणः समानकर्तृकादिच्छायां वा ) । ३ । १ । ७ । इतिसन् प्रत्यये एकाच्त्वादिण् निषेधे ( इकोझल् ) । १ । २ । ९ । इति सनः कित्वाद् गुणनिषेधे ( अज्झनगमां सनि ) । ६ । ४ । १६ । इति दीर्घे ( सन्यङोः ) । ६ । १ । ९ । इति द्वित्वेऽभ्यासकार्ये ( सन्लिटोर्जेः ) इति कुत्वेषत्वे जिगीषेत्यस्य ( सनाद्यन्ता ) इति धातुत्वात् लटः शतृप्रत्यये पूर्वोक्त कार्ये जिगीषन्त स्तेषाम् राजादीनां पूर्ववत् षष्ठी नीतिरस्मि नयनमिति प्रापणार्थात् णीञ् धातोः ( स्त्रियांक्तिन् ) । ३ । ३ । ९४ । इतिक्तिन् प्रत्यये गुणनिषेधे रूपम् अर्थाद्जयसाधनीभूतः सामाद्युपाय इतिभावः गुह्यानाम् गूहितुं योग्यानीति गुहधातोः शंसिदुहि गुहीति क्यप् प्रत्यये गुह्यानितेषाम् रहस्याना मिति यावत् " रहस्योपस्थयोर्गुह्यम् " इत्यमरः " गुह्यं रहस्युपस्थे च गुह्यः कमठदम्भयोः " इति विश्वः मौन मेवास्मि मुनेर्भावः कर्मवेति ( इगन्ताच्च० ) । ५ । १ । १३१ ।

* दाम्यत्यनेनेति दम् धातोः ( यमान्ताड्डः ) । १ । १४४ । इति ड प्रत्ययेऽनुस्वारे परसवर्णे दण्डः सैन्येयमेदमे। मानव्यूह ग्रहभेदेष्वश्वेऽर्थानुचरे मथि प्रकाण्डे लगुणे कोणे चतुर्थोपायगर्वयोः इतिहैमः

इत्यादिनाण् प्रत्यये आद्यचो वृद्धौ भत्वादिकारलोपे रूपम् " अथ मौनमभाषणम् " इत्यमरः ज्ञानवताम् ज्ञानं विद्यते येषामिति ( तदस्यास्त्यस्मिन् ) । ५ । २ । ६४ । इति मतुप् प्रत्यये ( मादु-पधायाश्चेत्यादिना मस्यवत्वे ज्ञानवन्त स्तेषाम् ( कर्मादीना मपि सम्बन्ध मात्र विवक्षायां षष्ठ्येव ) इत्यधिकरणत्वा विवक्षायां सम्बन्धे षष्ठी अर्थात् तत्त्वावबोधवत्सु ज्ञानमस्मि तत्त्वावबोध एवा-स्मीति भावः ज्ञायतेऽनेनेति ( करणाधिकरणयोश्च ) इति ज्ञातमिति ( ल्युट चेतिल्युटिवा अना-देशे दीर्घे रूपम् " मोक्षेधीर्ज्ञानम् " इत्यमरः ॥ ३८ ॥

**यच्चापि सर्व भूतानां बीजं तदहमर्जुन ॥**
**नतदस्ति विनायत् स्यात मयाभूतं चराचरम् ॥ ३९ ॥**

भो अर्जुन! सर्वं भूतानां यच्चापि बीजमस्ति तदहमेवास्मि यतो मयाविनायत् चराचरं भूतं स्यात् तन्नास्त्येवेत्यन्वयः ॥ ३९ ॥

भो अर्जुन ! अर्जयति गुणानिति अर्जनार्थात् प्रयोजकणिजन्ता दर्जिधातोः (अर्जे णिलु-क्च ) । उ० । इतिउनन् प्रत्ययेणेर्लुकि अर्जुनस्तत् सं० रूपम् स्वार्थाद्भोपार्थ " अर्जुनः ककुभे पार्थ कार्तवीर्ये मयूरयोः " इति मेदिनी प्रियगुणत्वेन गुणगरिष्ठां मद्गिर मुररीकर्तुमर्हस्त्व मसीति सम्बोधने तात्पर्यम् सर्वभूतानाम् सर्वाणि यानि भूतानीति ( पूर्वकालैक सर्वजरत् ) इत्यादिना समासे * सर्वभूतानि तेषाम् च पुनर्यदपि बीजम् प्ररोहकारणम् बीजते इति विपूर्वात् ईज गति कुत्सनयो रितिधातोः पचाद्यचि बीजन मिति ( खनोघच ) इत्यत्र घितकरणादन्यतोऽपि घ इति घ प्रत्यये चजोरित्यत्र निष्ठायामनिट इति कुत्वनिषेधे रूपम् यद्वा विशेषेण जायतेऽनेनेति विपूर्वा जनी प्रादुर्भावे इति धातोः उपसर्गे च संज्ञायाम् ) । ३ । २ । ९९ । इति ड प्रत्यये टेर्लोपे ( अन्ये-षामपि ) । ६ । ३ । १३७ । इति दीर्घे बवयोरभेदात् बीजम् यद्वा वीयते इति व्येञ् सम्वरणे धातोः ( सम्पदादि ) । वा० । ३ । ३ । १०८ । क्विप् प्रत्यये ( वचिस्वपि यजादीनां किति ) । ६ । १ । १५ । इति यकारस्ये कारे सम्प्रसारणे ( सम्प्रसारणाच ) । ६ । १ । १०८ । इति पूर्व रूपे ( हलः ) । ६ । ४ । २ । इति दीर्घे वीस्ताम् जायते जनयतीति अन्तर्भावितण्य-र्थतायाम् ( अन्येष्वपि ) । ३ । १ । १०१ । इति ड प्रत्ययें रूपम् यद्वा विशिष्टश्चासाविः काम इति ( कुगति प्रादयः ) । २ । २ । १८ । इति स० वीस्तस्मात्तेनवा जायते इति । ३ । १ । १०१ । इति ड प्रत्यये विशिष्टा चासावीर्लक्ष्मी जायतेयस्मात् दिति वारूपम् बजति कार्यं गच्छतीति गत्य-र्थाद्वज धातोः पचाद्यचि ( पृषोदरादित्वात् ) । ६ । ३ । १०९ । धातोरत ईत्वे बवयोरभेदात् बीजम् " हेतुर्नाकरणं बीजम् " इत्यमरः " बीजं तु रेतसि । स्यादाधाने च तत्वे च हेतावङ्कुर-कारणे " इति हैमः तदहं परमेश्वर एवास्मीति शेषः मया बिना अर्थात् परमेश्वरादृते ( पृथग् विना नानाभिस्तृतीयान्यतरस्याम् ) । २ । ३ । ३२ । इत्यस्मच्छब्दात् तृतीया नसहेति पृथगर्थाद्

---

* व्याख्यातम् २४ ।

वीत्यस्मात् ( विनञ्भ्यां नानाञौनसह ) । ५ । २ । २७ । इति ना प्रत्यये रूपम् " पृथग् बिनान्तरेणर्तेहिरुग् नाना च वर्जने " इत्यमरः यत् चराचरम् चरंचाचरंरेति समाहार द्वन्द्वे चराचरम् स्थावरजङ्गमम् चरतीति पचाद्यचि चरम् ततो नञ् समासे नलोपेऽचरम् भूतम् वस्तु स्याद् भवेत् अस् भुविधातोः विध्याद्यर्थे लिङः प्रथमपुरुषैकत्वे तिपि यासुडागमेतस्य ङित्वात् ( श्नसोरल्लोपः ) । ६ । ४ । १११ । इत्यकारलोपे अदादित्वाच्छपोलुकि ( इतश्च ) । ३ । ४ । १०० । इतीकारलोपे रूपम् तन्नास्तिन विद्यते इत्यर्थः मय त्यक्तस्य निरात्मकस्य शून्यत्वापत्तेः सर्वं मत्कार्यं मेवेति भावः ॥ ३६ ॥

**नान्तोऽस्ति मम दिव्यानां विभूतीनां परन्तप ॥**
**एषतूद्देशतः प्रोक्तो विभूते र्विस्तरो मया ॥ ४० ॥**

भो परन्तप ! मम दिव्यानां विभूतीना मन्तोनास्ति तु पुनः मयैष विभूते र्विस्तर उद्देशतः प्रोक्तोऽस्तीत्यन्वयः ॥ ४० ॥

भो परन्तप परान् शत्रून् काम क्रोधादि षट् संख्यकान् तापयतीति (द्विषत् परयोस्तापेः) । ३ । २ । ३६ । इति तापि धातोः खच् प्रत्यये आर्धधातुकत्वात् णेर्लोपे ( खचि ह्रस्वः ) । ६ । ४ ६४ । इत्युपधा ह्रस्वे नपपदसमासे ( अरुर्द्विषदजन्तस्यमुम् ) । ६ । ३ । ६७ । इति मुमागमेऽनुस्वारे परसवर्णे परन्तपस्तत् सम्बुद्धौ रूपम् अर्थाद् मद् विभूति परिचिन्तनेन जितारिकाम क्रोधादि षड्वर्ग इति सम्बोधने तात्पर्य्यम् मम परमेश्वरस्य दिव्यानाम् * विलक्षणानां विभूतीना * मैश्वर्यणा मन्तो* ऽवसानं नास्ति न विद्यते अर्थात् परमेश्वरविभूतीना मियत्तारहितत्वेन ताः केनापि ज्ञातुं वक्तुंवा न शक्या यतः सर्वज्ञत्वस्यापि तन्मात्र विषयत्वात् इति भावः तु पुनरर्थेऽव्ययम् मया परमेश्वरेण कर्तरि तृतीया त्वां प्रति एषोऽयम् ऐश्वर्यस्य विस्तरः * प्रपञ्चः उद्देशतः उद्दिशन मिति उद्पूर्वादिश धातोः (भावे) इतिघञ् प्रत्यये लघूपधगुणे उद्देशः ततः तृतीयान्तात् आद्यादेराकृति गणत्वात्तसि प्रत्यये ऽव्ययत्वम् अर्थादेकदेशेनोपलक्षणमात्रेणवा प्रोक्तः कथितः प्रपूर्वाद् वच् धातोः कर्मणि निष्ठा संज्ञके ( निष्ठा ) । ३ । २ । १०२ । इति क्त प्रत्यये ( वचिस्वपि ) । ६ । १ । १५ । इति सं० पू० चोःकुरिति कुत्वे रूपम् ॥ ४० ॥

**यद् यद् विभूतिमत् सत्वं श्रीमदूर्जित मेववा ॥**
**तत्तदेवावगच्छत्वं मम तेजोंश सम्भवम् ॥ ४१ ॥**

भो अर्जुन ! विभूतिमत् श्रीमद्वा ऊर्जितं वा यद् यदेव सत्व मस्ति तत्तदेव सत्वम् मम तेजोंशसम्भव मेवत्वमवगच्छेदयन्वयः ।

* व्याख्यात्तम् १३ ।

भो अर्जुन ! विभूतिमत् विभूति रैश्वर्यं विद्यते यस्यास्मिन् वेति ( तदस्यास्त्यस्मिन् ) ।५।२।६४। इति मतुप् प्रत्यये रूपम् श्रीमत् वा श्रीः शोभा सम्पत्तिर्वा विद्यते यस्यास्मिन्निति मतुप् प्रत्यये रूपम् " शोभा सम्पत्ति पद्मासुलक्ष्मीः श्री रिति गद्यते इति ऊर्जितं वा ऊर्जन मूर्जितम् ऊर्जबल प्राणनयोरिति धातोः ( नपुंसके भावेक्तः ) । ३ । ३ । ११४ । इति क्त प्रत्यये तस्यार्धधातुकत्वादिडागमे रूपम् यद्वा ऊर्जन मिति ( गुरोश्चहलः ) । ३ । ३ । १०३ । इत्यकार प्रत्यये टापि दीर्घे ऊर्जा सा संजाता यस्य तदिति ( तदस्य संजातम् ) । ५ । २ । ३६ । इति तारकादेराकृति गणत्वादितच् प्रत्यये भत्वादाकार लोपे रूपम् यद्यद् ( नित्य वीप्सयोः ) इति वीप्सायां द्विरुक्तिः सत्वम् जन्तु सीदन्त्यस्मिन्निति षद्लृ धातोः ( अन्येभ्योऽपि दृश्यन्ते ) उ० । ४ । १०५ । इतित्वन् प्रत्यये चर्त्वेरूपम " सत्वं गुणेपिशाचादौ बलेद्रव्यस्वभावयोः आत्मत्वव्यवसायासुवित्तेष्वस्त्री तु जन्तुषु " इति मेदिनी तत्तदेव पूर्ववद्द्विरुक्तिः अवधारणार्थक एव शब्दः त्वमर्जुनः मम परमेश्वरस्य सम्बन्धे षष्ठी तेजसो धाम्नोंऽशः एक देशः अंश्यते इति अंशविभाजने धातोः ( अकर्तरिच ) । ३ । ३ । १९ । इति घञ् प्रत्यये रूपम् " अंशोविभाजने प्रोक्त एकदेशोः ऽपिवस्तुनः " इति हेमचन्द्रः तस्मात् सम्भव उत्पत्तिर्यस्यनदिति व्यधिकरणपद बहुव्रीहि समासे यद्वा सएव सम्भवोयस्य तदिति रूपम् अवगच्छ विद्धि अवपूर्वाद् गत्यर्थाद् गम् धातो र्लोटो मध्यमपुरुषैकत्वे सिपितस्य ( सेर्ह्यपिच ) । ३ । ४ । ८७ । इति ह्यादेशे सार्वधातुकत्वाच्छपि ( इषुगमि ) । ७ । ३ । ७७ । इति मस्य छत्वे तुकिचुत्वे ( अतोहेः ) । ६ । ४ । १०५ । इति हेर्लुकि रूपम् ॥ ४१ ॥

**अथवा बहुनैतेन किं ज्ञानेन तवार्जुन ॥**
**विष्टभ्याह मिदं कृत्स्न मेकांशेन स्थितोजगत् ॥ ४२ ॥**

अथवा पक्षान्तरे बहुना एतेन ज्ञानेन तवकिम यतोऽहं भो अर्जुन इदं कृत्स्नं जगत् विष्टभ्य एकेनांशेन स्थितोऽस्मीत्यन्वयः ॥

अथवा पक्षान्तरे अर्थयन्ते इति अर्थ उपयाञ्चायाम् इति धातोः ( अन्येभ्योऽपि ) । वा० । ३ । २ । १०२ । इति ड प्रत्यये टेर्लोपे पृषोदरादित्वा द्रलोपेऽथेति " अथाथो संशयेस्याता मधिकारेच मङ्गले विकल्पानन्तर प्रश्न कार्त्स्न्यारम्भसमुच्चये " इति मेदिनी " मङ्गलानन्तरारम्भ प्रश्न कार्त्स्न्येष्वथो अथ " इत्यमरः पचादित्वादचिणेर्लोपे वा रूपम् वातीति वानंवेति गतिगन्धनार्थाद् वाधातोः ( क्विप्च ) । ३ । २ । ७६ । इति ( सम्पदादित्वात् ) वा किपिरूपम् " उपमायां विकल्पे वा " इत्यमरः " वास्यात् विकल्पोपमयोवितर्के पादपूरणे समुच्चयेच " इति मेदिनी " वास्याद् विकल्पोपमयोरेवार्थेच समुच्चये " इति विश्वः भो अर्जुन गुणग्राहित्वेनास्य तत्वोपदेशाधिकारिता सम्बोधने तात्पर्य्यम् बहुना सविस्तरेण बंहते इति वृद्ध्यर्थाद् बंहधातोः ( लङ्घिबंह्योर्नलोपश्च )

। उ० । १ । इति कुप्रत्यये नकारलोपे रूपम् ( बहुस्तुत्र्यादिसंख्यासु विपुलेऽवभिधेयवत् ” इति मेदिनी तेनैतेन सम्प्रत्येव चित्तशोधकेन मदुक्तेन ज्ञानेनाववोधेन तव स्वयं विशुद्धचेतसः समर्थस्य किम् प्रयोजन मिति शेषः अर्थाद् शुद्धचित्ते शक्तेत्वयि चित्त शोधकस्यैतज्ज्ञानस्य प्रयोजना भाव इति भावः युष्मच् छन्दात् कर्तरि षष्ठी कूयते कवनंवेति कुशब्दे कुङ्गताविति धातोर्वा ( उणादयो वहुलम् ) । ३ । ३ । १ । इति बाहुलकाद्डिम् प्रत्यये टेर्लोपे रूपम् “ किं पृच्छायां जुगुप्सने ” इत्यमरः “ किं कुत्सायां नितर्केच निषेधे प्रश्नयोरपि ” इति मेदिनी यतोऽहम् इदं प्रत्यक्षतो दृश्यमानं कृत्स्नम् सम्पूर्णम् कृत्यते इति कृती धातोः ( कृत्यशूभ्यां कृस्नः ) । उ० । ३ । १७ । इति कृस्न प्रत्यये गुण निषेधे रूपम् “ कृत्स्नं सर्वाम्बु कुक्षिषु ” इति मेदिनी जगद्भुवनम् गच्छतीति गम् धातोः ( द्युतिगमिजुहोतीनां द्वे च) । वा० । इति क्विप् प्रत्यये धातोर्द्वित्वे ऽभ्यास कार्ये ( गमः क्वौ ) । ६ । ४ । ४० । इति मकारलोपे ( ह्रस्वस्यपिति ) । ६ । ; । ७१ । इति तुगागमे रूपम् ( वर्तमाने पृषन् महत् ) इत्यौणादिके ऽतिप्रत्यये वा रूपम् “ जगत् स्याद् विष्टपे क्लीवं वायौना जङ्गमेत्रिषु ” इति मेदिनी “ विष्टपं भुवनं जगत् ” इत्यमरः विष्टभ्य विशेषेण स्तम्भनं दृढं कृत्वा विष्टम्भित्वेति विपूर्वाद् रोधनार्थात् सौत्रात् स्तन्भुधातोः ( समानकर्तृकयोः ) इति क्त्वा प्रत्यये (कुगति प्रादयः) इति समासे (समासेऽनञ् पूर्वे क्त्वोल्यप् )। ७।१ । ३७ । इति ल्यवादेशे ( अनिदिता मित्युपधानकारलोपे (स्तन्भेः ) ।८। ३ । ६७ । षत्वेष्टुत्वेच रूपम् एकांशेन एकश्वासा वंश इति ( पूर्व कालैक सर्व जरत् पुराणनव केवलाः समानाधिकरणेन ) इति समासे एकांशस्तेन साधनी भूतेन तथाच श्रुतिः पादोऽस्य विश्वा भूतानि इति । स्थितः अस्थादिति स्थाधातोः कर्तरि ( गत्यर्थाकर्मक० ) । ३ । ४ । ७२ । इत्यादिना क्तप्रत्यये ( द्यतिस्यति मा स्थामित्ति किति ; । ७ । ४ । ४० । इत्याकारस्येत्वे रूपम् ॥ ४२ ॥

इति श्री १०८ मत् परमहंस परिव्राजकाचार्य स्वामि श्रीमन् मनीष्यानन्द तीर्थ
पादार विन्द मधुव्रत दीक्षितोपाधि विद्वद्वर छगनलाल-
सूनुनत्थीलाल देव शर्म विरचितायां वृत्तिप्रभा
व्याख्यायां विभूति योगोनाम
दशमोध्यायः ।

## विशेषतो द्रष्टव्यम्

इदञ्च गीताशास्त्रं वृत्तिप्रभोपेतं दशमाध्यायात्मकं दिदृक्षूणा मवलोकनाया दर्शरूपेणो-पस्थाप्यते अन्योऽप्यविकलः पूर्वोत्तरभागोनचिरादेव प्रकाशीभूय प्रेक्षावतां दर्शनगोचरमेष्यति इति भावत्कः।

—प्रकाशकः

पुस्तक प्राप्ति स्थानम्

**कात्यायनी पीठ**

राधाबाग-वृन्दाबनम्।